हरिवंश वेदालंकार

संशोधित

# पञ्चतन्त्रकम्

[ पूर्वार्द्धम् ]






गुरुकुल कांगड़ी विश्वविद्यालय-हरिद्वार

ओ३म्



# गुरुकुल-ग्रन्थावलिः

# संशोधित पञ्चतन्त्रकम्

[ पूर्वार्द्धम् ]




'सुबोधिनी' टिप्पण्या शब्दार्थ संग्रहेण च संवलितम् ।




चतुर्थ संस्करणम् १००० } सम्वत् २००८ { मूल्य सजिल्द २॥)

ओ३म्

# प्रस्तावना

पञ्चतन्त्रमिदं किल संस्कृतसाहित्यस्य समुज्ज्वलतमं भूषणम्। न केवलं भारते वर्षे, न केवलं देववाणीरसिकेषु, अपितु सर्वत्रापि भूमण्डले अस्य ग्रन्थस्य महती प्रतिष्ठा वरीवर्ति। अद्यापि जगतः प्रियोपदेशसाधनेषु ग्रन्थेषु प्रथमस्य स्थानम्। न चास्येयं कीर्तिनवीना; ख्रीष्टसंवत्सरारम्भादपि पूर्वमस्य भारतीयजगन्मण्डले समादरः श्रूयते। षष्ठ्यां ख्रीष्टशताब्द्यां'खुस्रो अनुशेरवां,इत्याख्यस्य ससेनियननृपतेराज्ञयाऽयं ग्रन्थः पह्लवीभाषायामनूदितोऽभूत्। अष्टमशताब्द्यां च तस्यैव पुनराख्यभाषायामनुवादः संजात इत्युपलभ्यते। इत्येवश्चिरकालात्संसारविदितमिदं पञ्चतन्त्रकमद्यापि तादृशमेवादरं लभते, यादृशं रचनाकाले लेभे।

भाषाऽस्य रुचिरा मधुरा सरला च। न तत्र अप्रसिद्धपदानां समावेशो, नापि च समासबाहुल्यम्। बालैरपि प्रौढैरपि चास्याध्ययनं विधातुं शक्यम्। कथाः सर्वा अपि मनोहारिण्य उपदेशप्रदाश्च। यद्यपि तेषु पात्राणि प्रायः पशुपक्षिकीटादिभ्य एव संगृहीतानि, तथापि तेन पुस्तकस्योपयोगितायाः परिवृद्धिरेवजाता न क्षयः। भाषाया माधुर्यं, विषयस्य चोपयोगित्वमस्य ग्रन्थस्य प्राचीनत्वे प्रबलप्रमाणमस्ति। मध्यकालनिर्मितेषु ग्रन्थेषु शब्दाटोपो भूयानुपलभ्यते, न तथा पञ्चतन्त्रे। ख्रीष्टाब्दारम्भादशीत्यधिक त्रिशद् वर्षाणि पूर्वं वैशालीसभायां संगृहीतासु गाथासु

पञ्चतन्त्रस्य नामोपलभ्यते । तस्मादति प्राचीनोऽयं ग्रन्थ इति अनायासेनैव ज्ञातुं शक्यते । केचित्तु महाराजचन्द्रगुप्तमौर्यस्य गुरुणा विष्णुगुप्तनाम्ना चाणक्येन तस्य शिष्येण वा केनचित् प्रणीतोऽयमिति वदन्ति ।

निश्चितः कालः कोऽपि भवेत्; अस्य अतिप्राचीनत्वे सन्देहो नास्ति । बौद्ध कालात्तु अर्वाचीनत्वमस्येति यदितिहासज्ञा वदन्ति तदपि सत्यं प्रतीयते । सन्ति बहूनि लक्षणानि ग्रन्थान्तर्गतान्येव, यैरस्य बौद्धधर्मोदयादुत्तरकालित्वं विज्ञायते । बौद्धानां त्रिविध-जातकेभ्यो रुचिरा उपदेशप्रदाश्च कथाः संगृह्य, काश्चिच्च स्वतन्त्राः सन्निवेश्य, सरलया गिरा निबद्धमिदम्पञ्चतन्त्रं लोकहिताय वि-ष्णुशर्मणा इत्यत्र सन्देहो नावशिष्यते, यदा वयं बौद्धग्रन्थैः विशेषतया जातक ग्रन्थैः सहास्य तुलनां कुर्मः । गाथाः प्रायएकविधा दृश्यन्ते ।

एकस्तु बौद्धसिद्धान्तेभ्यो महान्भेदोऽत्रग्रन्थे स्फुटं उपलभ्यते । बौद्धा हि मनुष्यजन्म दुःखात्मकं हेयञ्च मन्यन्ते । न तेऽत्र किमपि जीवितव्यम्पश्यन्ति, निर्वाणं क्रियाविराममेव च ते उपादेयं मन्यन्ते । पञ्चतन्त्रे पुनः जीवनं जीवितव्यत्वेन समुपदिष्टम् । जीवनोचिता एव चोपदेशाः प्रदत्ताः । कथं राज्यं रक्षणीयम् ? कथं शत्रवो विनाशनीयाः ? केन विधिना जगति विजयः प्राप्यः ? इत्येतेषां प्रश्नानामेवोत्तराणि सर्वस्मिन्पञ्चतन्त्रके प्रधानतया समुपलभ्यन्ते । अतएव चायं ग्रन्थ आर्यजात्यै विशेषतया लाभ-करः शिक्षाप्रदश्च । सुप्ता विगतसारा सान्धकारा सन्ध्येव खेदप्रदा इयमार्यजातिः । इयं किल जीवनौषधमवेक्षते न पुनः मरणोपायम् ।

पञ्चतन्त्रं हि मनोहरकथोपनिबद्धत्वादतिरुचिरं बालेभ्य आत्यन्तमुपकारकम्। संस्कृतभाषायांप्रवेशमिच्छुभ्यः नैतद्विधः कोऽप्यन्यो ग्रन्थः समुपलभ्यते। एकन्तु वैषम्यमुपलक्ष्यते। क्वचित् क्वचिदेतस्मिन्नीदृश्योऽश्लीलसीमानमाप्नुवत्यः शृङ्गाररसपूर्णाश्च गाथाः सन्ति यासामध्ययनं बालेभ्यो विशेषतया ब्रह्मचारिभ्यो न समुचितं प्रतीयते। गुरुकुले पञ्चतन्त्राध्यापनकाले महदिदं काठिन्य मनुभूयते। अतः 'यन्नवे भाजने लग्नः संस्कारोनान्यथा भवेत्' इति विचिन्त्य इदम्पञ्चतन्त्रस्य संशोधितं संस्करणं गुरुकुलप्रबन्ध कर्तृभिर्मुद्रापितम्। पञ्चतन्त्रात् शृङ्गाररसप्रधाना गाथाः बालेभ्यो ऽति कठिनाः श्लोकाश्च पृथक्कृताः। तस्यमुख्यो रुचिकरश्च कथाभागो-ऽऽस्मिन्भागद्वयात्मके संस्करणे स्थापितः। न केवलं गुरुकुल एव, अपितु बहिरप्यन्यासु पाठशालास्वस्योपयोगः साधीयः फलमुत्पादयिष्यति। संस्कृतभाषायान्न समुचितानि पाठ्यपुस्तकान्युपलभ्यन्ते। उत्तमानिचेदतिकठिनानि द्वितीयाश्रमिभिरेव चाध्यतेव्यानि भवन्ति, व्रतिसमुपयोगिनां ग्रन्थानां तु सर्वथा अभाव एव प्रतीयते। इयङ्गच्छन्ती ग्रन्थमाला यदि पूर्त्तिमेष्यति, नायमभावश्चिरं स्थास्यति।

इदम्पुस्तकमध्यापयद्भिरध्यापकैरवश्यमवधातव्यं यद् बालास्तत्र कथितानाङ्कथानां सम्भवमेव चाभिप्रायं स्वीकुर्युः तस्य पशुपक्ष्यादि-पात्रेषु प्रदर्शितान्दुर्भावान्पापदृष्ट्या, सद्भावांश्च धर्मदृष्ट्या पश्येयुः। उचितामेव शिक्षांततोगृह्णीयुर्न तदितराम्। अध्यापकाश्च यत्र यत्र च क्वचित्स्त्रीजातिम्प्रत्यपमानजनकाः तत्राविश्वासजनकाश्च शब्दा भावा वा भवेयुस्तत्र तेषा मसामञ्जस्यमवश्यं प्रदर्शयेयुः। एवं यत्र

क्वचिद् धार्मिकविचारा अपि भ्रमज्ञानग्रस्ताः स्युस्तेषां तत्रैव निरासं कुर्युः। यतो न शिक्षा केवलं भाषापरिज्ञानायैव दीयते, अपि विचार-संशोधनाय धर्मशक्तिसम्पादनाय च।

प्रकाशकः।

## चतुर्थ संस्करणस्य भूमिका

इदं प्रस्तुतं संस्करणं गुरुकुल विश्वविद्यालयस्य अध्यापकेन श्रीमता धर्मदेव महोदयेन वेदवाचस्पतिना महता प्रयासेन परिष्कृत्य शृङ्गाराद्यश्लीलदुरूहस्थलांशवर्जं सुबोधिनी टिप्पण्या समलंकृतम्।

अध्यापकानां साहाय्याय ग्रन्थस्य अधस्तात् टिप्पण्यः, प्रति-तन्त्रावसाने च कठिनशब्दानामर्थो अपि हिन्दी भाषायां छात्राणा-मुपयोगाय संकलिताः। मन्ये इदं संस्करणं संस्कृतज्ञानवृद्ध्यै महद्‌ करिष्यति।

गुरुकुल कांगड़ी<br>श्रावणी पर्व २००८ वि०

प्रियव्रतः<br>आचार्यः

ओ३म्

# पञ्चतन्त्रकम्

## कथामुखम्

अनन्तनामधेयाय सर्वाकारविधायिने ।
समस्तमन्त्रवाच्याय विश्वैकपतये नमः ॥१॥
मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥२॥
सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥३॥

---

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थिकल्पद्रुमः प्रवर-मुकुटमणि-मरीचि-मञ्जरी-चर्चित-चरणयुगलः सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेति नामानो बभूवुः । अथ राजा ताञ्शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच—'भोः, ज्ञातमेतद्भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तदेतान्पश्यतो मे महदपि राज्यं न सौख्यमावहति ।

अथवा साध्विदमुच्यते—

अजातमृतमूर्खेभ्यो[1] मृताजातौ सुतौ वरम् ।[2]
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥४॥
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ॥५॥

---

१. अत्र पञ्चमी न साधुः । 'यतश्च निर्धारणम्' इति षष्ठी सप्तमी वा वक्तव्या ।
२. वरं—मनाक् प्रियम् (बेहतर, अपेक्षाकृत अच्छा) । अत एव नित्यं नपुंसकम् । "देवाद् वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक् प्रिये"—इत्यमरः ।

गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद् यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥६॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयताम्' इति ।

तत्रैकः प्रोवाच--'देव, द्वादशभिर्वर्षैर्व्याकरणं श्रूयते । ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि । एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते । ततः प्रतिबोधनं भवति ।' अथ तन्मध्यतः सुमतिर्नाम सचिवः प्राह--'अशाश्वतोऽयं जीवितव्यविषयः । प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत्संक्षेपमात्रं शास्त्रं किंचिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तं च यतः--

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥७॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगमश्छात्रसंसदि लब्धकीर्तिः । तस्मै समर्पयतु एतान् । स नूनं द्राक्प्रबुद्धान्करिष्यति' इति ।

स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच-- 'भो भगवन्, मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथानन्यसदृशान् विदधासि तथा कुरु । तदाहं त्वां शासनशतेन योजयिष्यामि ।' अथ विष्णुशर्मा तं राजानमूचे--'देव, श्रूयतां मे तथ्यवचनम् । नाहं विद्याविक्रयं शासनशतेनापि करोमि । पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि, ततः स्वनामत्यागं करोमि । किं बहुना, श्रूयतां ममैष

१. अत्र 'अपवर्गे तृतीया' इति तृतीया विभक्तिः ।

सिंहनादः नाहमर्थलिप्सुर्ब्रवीमि[१]। ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किंचिदर्थेन प्रयोजनम्। किंतु त्वत्प्रार्थनासिद्ध्यर्थं सरस्वतीविनोदं करिष्यामि। तल्लिख्यतामद्यतनो दिवसः। यद्यहं षण्मासाभ्यन्तरे तव पुत्रान्नयशास्त्रं प्रत्यनन्यसदृशान्न करिष्यामि, ततो नार्हति देवो देवमार्गं संदर्शयितुम्।'

अथासौ राजा तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितः तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम।

विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद-मित्रसंप्राप्ति-काकोलूकीय-लब्धप्रणाश-अपरीक्षितकारकाणि चेति पञ्चतन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम्। किं बहुना।

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन ॥८॥

१. लब्धुमिच्छति लिप्सते, कर्ता चेत् लिप्सुः। इति सन्नन्तात् लभ धातोः सनाशंसभिक्ष उः इति उः प्रत्ययः॥

इति कथामुखम्।

# मित्रभेदः

अथातः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्यायमादिमः श्लोकः--

वर्धमानो महान्स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते--अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिद्रात्रौ शय्यारूढस्य चिन्ता समुत्पन्ना--यत्प्रभूतेऽपि वित्तेऽर्थोपायाश्चिन्तनीयाः कर्तव्याश्चेति । यत उक्तं च--

न हि तद्विद्यते किंचिद्यदर्थेन न सिद्ध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥२॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥३॥

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥४॥

पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥५॥

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥६॥

गतवयसामपि पुंसां येषामर्था भवन्ति ते तरुणाः ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः ॥७॥

स चार्थः पुरुषाणां षड्भिरुपायैर्भवति--भिक्षया, नृपसेवया, कृषिकर्मणा, विद्योपार्जनेन, व्यवहारेण, वणिक्कर्मणा वा । सर्वेषामपि

तेषां वाणिज्येनातिरस्कृतोऽर्थलाभः स्यात् । उक्तं च यतः—

कृता भिक्षानेकै,र्वितरति नृपो नोचितमहो
कृषिः क्लिष्टा[1] विद्या गुरुविनयवृत्त्याऽतिविषमा ।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमनात्
न मन्ये वाणिज्यात्किमपि परमं वर्तनमिह ॥८॥

उपायानां च सर्वेषामुपायः पण्यसंग्रहः ।
धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥९॥

तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात् । तद्यथा–(१) गान्धिकव्यवहारः, (२) निक्षेपप्रवेशः, (३) गोष्ठिककर्म, (४) परिचितग्राहकागमः, (५) मिथ्याक्रयकथनम्, (६) कूटतुलामानम्, (७) देशान्तराद्भाण्डानयनं चेति । उक्तं च—

पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः ।
यत्रैकेन च यत्क्रीतं तच्छतेन प्रदीयते ॥१०॥
निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम् ।
निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥११॥
गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः ।
वसुधा वसुसंपूर्णा मयाऽद्य लब्धा किमन्येन ॥१२॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ ।
हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥१३॥

अन्यच्च ।

पूर्णापूर्णे मानैः[2] परिचितजनवञ्चनं, तथा नित्यम् ।

---

१. 'कृषिः क्लिष्टा वृष्ट्या, प्रचुरगहनः सेवनविधिः,' इत्यपि पाठः क्वचित् ।
२. पूर्णापूर्णे माने इति पाठः प्रायेण दृश्यते ।

मिथ्याक्रयस्य कथनं, प्रकृतिरियं स्यात्किराटानाम् [१] ॥१४॥

अन्यच्च ।

द्विगुणं त्रिगुणं वित्तं भाण्डक्रयविचक्षणाः ।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः ॥१५॥

इत्येवं संप्रधार्य मथुरागामीनि भाण्डान्यादाय शुभायां तिथौ गुरुजनानुज्ञातः सुरथाधिरूढः प्रस्थितः । तस्य च मङ्गलवृषभौ संजीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढारौ स्थितौ । तयोरेकः संजीवकाभिधानो यमुनाकच्छमवतीर्णः सन् पङ्कपूरमासाद्य कलितचरणो युगभङ्गं विधाय निषसाद । अथ तं तदवस्थमालोक्य वर्धमानः परं विषादमगमत् । तदर्थं च स्नेहार्द्रहृदयस्त्रिरात्रं प्रयाणभङ्गमकरोत् । अथ तं विषण्णमालोक्य सार्थिकैरभिहितम्—'भोः श्रेष्ठिन्, किमेवं वृषभस्य कृते सिंहव्याघ्रसमाकुले बह्वपायेऽस्मिन्वने समस्त सार्थस्त्वया संदेहे नियोजितः । उक्तं च—

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
एतदेवात्र पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम् ॥१६॥

अथासौ तदवधार्य संजीवकस्य रक्षापुरुषान्निरूप्याशेषसार्थं नीत्वा प्रस्थितः । अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा संजीवकं परित्यज्य पृष्ठतो गत्वाऽन्येद्युस्तं सार्थवाहं मिथ्याऽऽहुः—'स्वामिन्, मृतोऽसौ संजीवकः । अस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृतः' इति । तच्छ्रुत्वा सार्थवाहः बहु विललाप ।

संजीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रैः शिशिरतवातैरा-

---

१. 'किरातानाम्, इति बाहुलिकः पाठः । परं उपरिष्टाल्लिखितः पाठ एव संगच्छते । आदशमात् श्लोकात् एकैकस्य अर्थागमस्य वर्णनम् । परं अस्मिन् श्लोके अर्थागमस्य प्रकार द्वयं सहैव वर्णितम् ।

प्यायितशरीरः कथंचिदप्युत्थाय यमुनातटमुपपेदे । तत्र मरकतसदृशानि बालतृणाग्राणि भक्षयन् कतिपयैरहोभिर्वनकरीव पीनः ककुद्मान्बलवांश्च संवृत्तः । प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन्गर्जमान आस्ते । साधु चेदमुच्यते—

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने । विसर्जितः । कृतप्रयत्नोऽपि गृहे विनश्यति ॥१७॥

अथ कदाचित्पिङ्गलको नाम सिंहः सर्वमृगपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्णः संजीवकस्य गम्भीरतरारावं दूरादेवाशृणोत् । तच्छ्रुत्वातीव व्याकुलहृदयः ससाध्वसमाकारं प्रच्छाद्य वटतले चतुर्मण्डलावस्थानेनावस्थितः । चतुर्मण्डलावस्थानं त्विदम्—सिंहः, सिंहानुयायिनः, काकरवाः, किंवृत्ता इति ।

अथ तस्य करटकदमनकनामानौ द्वौ शृङ्गालौ मन्त्रिपुत्रौ भ्रष्टाधिकारौ सदानुयायिनावास्ताम् । तौ च परस्परं मन्त्रयतः । तत्र दमनकोऽब्रवीत्— 'भद्र करटक, अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य स्थितः । स किंनिमित्तं पिपासाकुलोऽपि निवृत्य व्यूहरचनां विधाय दौर्मनस्येनाभिभूतोऽत्र वटतले स्थितः ।' करटक आह—'भद्र, किमावयोरनेन व्यापारेण । उक्तं च यतः—

अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स एव निधनं याति कीलोत्पाटीव वानरः' ॥१८॥

दमनक आह—'कथमेतत् ।' सोऽब्रवीत्—

## १ कीलोत्पाटि वानर कथा ।

कस्मिंश्चिन्नगराभ्याशे केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतनं कर्तुमारब्धम् । तत्र च ये कर्मकराः स्थपत्यादयः, ते मध्याह्नवेला-

माहारार्थं नगरमध्ये गच्छन्ति। अथ कदाचित्तत्रानुषङ्गिकं वानरयूथमितश्चेतश्च परिभ्रमदागतम्। तत्र कस्य कस्यचिच्छिल्पिनोऽर्धस्फाटितोऽञ्जनवृक्षदारुमयः स्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति। एतस्मिन्नन्तरे ते वानराः तरुशिखरप्रासादशृङ्गदारुपर्यन्तेषु यथेच्छया क्रीडितुमारब्धाः। एकश्च तेषां प्रत्यासन्नमृत्युश्चापल्यात्तस्मिन्नर्धस्फाटितस्तम्भ उपविश्य पाणिभ्यां कीलकं संगृह्य यावदुत्पाटयितुमारेभे, तावत्तस्य स्तम्भमध्यगतपादस्य स्वस्थानाच्चलितकीलकेन यद्वृत्तं तत्प्रागेव निवेदितम्। अतोऽहं ब्रवीमि--'अव्यापारेषु' इति॥ आवयोर्भक्षितशेष आहारोऽस्त्येव। तत्किमनेन व्यापारेण।' दमनक आह--'तत्किं भवानाहारार्थी केवलमेव। तन्न युक्तम्। उक्तं च--

सुहृदामुपकारकारणाद् द्विषतामप्यमकारकारणात्।
नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम्॥१९॥

किं च।

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम्॥२०॥

तथा च।

यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानशौर्यविभवार्यगुणैः समेतम्।
तन्नाम जीवितमिह प्रवदन्ति प्राज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते॥२१॥

यो नात्मना न च परेण न च बन्धुवर्गे।
दीने दयां न कुरुते न च भृत्यवर्गे।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते॥२२॥

सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥२४॥

किंच ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥२५॥
परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥२६॥
जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम् ।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥२७॥

तथा च ।

अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥२८॥

करटक आह—आवां तावदप्रधानौ । तत्किमावयोरनेन व्यापारेण ।

उक्तं च—

अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसंमानं लभते च विडम्बनम् ॥२९॥

तथा च ।

वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायी भवति चात्यन्तं रागः शुक्लपटे यथा' ॥३०॥

दमनक आह—'मा मैवं वद ।

अप्रधानः प्रधानः स्यात्सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जितः ॥३१॥

यत उक्तं च—

आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंस्कृतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश्च

यत्पार्श्वतो भवति तत्परिवेष्टयन्ति ॥३२॥

तथा च ।

कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः ।
आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम् ॥३३॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् ।
सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥३४॥
ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः ।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥३५॥
सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशीकृतान् ।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥३६॥

करटक आह—'अथ भवान्किं कर्तुमनाः ।' सोऽब्रवीत्—'अद्यास्मत्स्वामी पिङ्गलको भीतो भीतपरिवारश्च वर्तते । तदेनं गत्वा भयकारणं विज्ञाय संधि-विग्रह-यान-आसन-संश्रय-द्वैधीभावानामेकतमेन संविधास्ये ।' करटक आह—'कथं वेत्ति भवान्यद्भयाविष्टोऽयं स्वामी ।' सोऽब्रवीत्—'ज्ञेयं किमत्र । यत उक्तं च—

उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥३९॥

तथा च मनुः—

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥४०॥

तदद्यैनं भयाकुलं प्राप्य स्वबुद्धिप्रभावेण निर्भयं कृत्वा वशीकृत्य च निजां साचिव्यपदवीं समासादयिष्यामि ।' करटक आह—'अनभिज्ञो भवान्सेवाधर्मस्य । तत्कथमेनं वशीकरिष्यसि ।' सोऽब्रवीत्—'कथ-

महं सेवानभिज्ञः । मया हि तातोत्सङ्गे क्रीडताभ्यागतसाधूनां नीतिशास्त्रं पठतां यच्छ्रुतं सेवाधर्मस्य सारभूतं हृदि स्थापितम् । श्रूयताम् । तच्चेदम्—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥४१॥
यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ४२ ॥
यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः ।
सोऽर्कवन्नृपतिस्त्याज्यः सदापुष्पफलोऽपि सन्॥ ४३ ॥
राजमातरि देव्यां च कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रतीहारे सदा वर्तेत राजवत् ॥ ४४ ॥
अन्तःपुरचरैः सार्धं यो न मन्त्रं समाचरेत् ।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ ४५ ॥
द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ।
पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ ४६ ॥
युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे ।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ४७ ॥
संमतोऽहं विभोर्नित्यमिति मत्वा व्यतिक्रमेत् ।
कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ ४८ ॥
द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ४९ ॥
प्रोक्तः प्रत्युत्तरं नाह विरुद्धं प्रभुणा च यः ।
न समीपे हसत्युच्चैः स भवेद्राजवल्लभः ॥ ५० ॥
यो रणं शरणं तद्वन्मन्यते भयवर्जितः ।

प्रवासं स्वपुरावासं स भवेद्राजवल्लभः ॥ ५१ ॥
न कुर्यान्नरनाथस्य योषिद्भिः सह संगतिम् ।
न निन्दां न विवादं च स भवेद्राजवल्लभः ॥ ५२ ॥

करकट आह—'अथ भवांस्तत्र गत्वा किं तावत्प्रथमं वक्ष्यति तत्तावदुच्यताम् ।' दमनक आह—

'उत्तरादुत्तरं वाक्यं वदतां संप्रजायते ।[१]
सुवृष्टिगुणसंपन्नाद्बीजाद्बीजमिवापरम् ॥ ५३ ॥
एकेषां वाचि शुकवदन्येषां हृदि मूकवत् ।[२]
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तयः ॥ ५४ ॥

न चाहमप्राप्तकालं वक्ष्ये । आकर्णितं मया नीतिसारं पितुः पूर्वमुत्सङ्गं हि निषेवता ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बह्ववज्ञानमपमानं च पुष्कलम्' ॥ ५५ ॥

करटक आह—'यद्येवमभिमतं तर्हि शिवास्ते पन्थानः सन्तु । यथाभिलषितमनुष्ठीयताम् ।' सोऽपि प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे ।

---

१. वदतां—परस्परं आलपतां जनानां एकस्मादुत्तरात् उत्तरं वाक्यं सम्प्रजायते तदेव दृष्टान्तेनाह—सुवृष्टिरेव गुणः तेन सम्पन्नात् युक्तात्, यद्वा सुवृष्ट्या हेतुना गुणसम्पन्नात् परिपुष्टादित्यर्थः बीजात् अपरं बीजमिव । परस्परं आलपतां जनानां एकस्य उत्तरमाकर्ण्य, अपरस्य स्वयमेव उत्तरं स्फुरति । तस्मात् तत्र गत्वा किं वदयति इति न काऽपि चिन्ता कार्या इत्यभिप्रायः ॥

२. सूक्तयः किल शुकवत् एकेषां जनानां वाचि एव, न तु हृदि वल्गु—मनोरमं यथास्यात्तथा वल्गन्ति प्रस्फुरन्ति । अथ मूकवत् अन्येषां जनानां हृदि एव न तु वाचि वल्गु वल्गन्ति । तथा अन्येषां जनानां हृदि वाचि इति उभयत्रापि वल्गु वल्गन्ति ते हि किल सूक्तीनामभिप्रायं स्वयमपि सम्यगवच्छन्ति परेषामपि सुस्पष्टं प्रकाशयन्ति इति भावः ।

अथागच्छन्तं दमनकमालोक्य पिङ्गलको द्वाःस्थमब्रवीत्—'अपसार्यतां वेत्रलता। अयमस्माकं चिरंतनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेशः। तत्प्रवेश्यतां द्वितीयमण्डलभागी' इति। स आह—'यथाऽऽदिष्टवान्' इति। अथोपसृत्य दमनको निर्दिष्ट आसने पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्टः। स तु तस्य नखकुलिशालंकृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—'अपि शिवं भवतः। कस्माच्चिराद् दृष्टोऽसि। दमनक आह—'न किंचिद्देवपादानामस्माभिः प्रयोजनम्। परं भवतां प्राप्तकालं वक्तव्यम्, यत उत्तममध्यमाधमैः सर्वैरपि राज्ञां प्रयोजनम्। उक्तं च—

दन्तस्य निष्कोषणकेन नित्यं
कर्णस्य कण्डूयनकेन वापि।
तृणेन कार्यं भवतीश्वराणां
किमङ्ग वाग्घस्तवता[१] नरेण ॥५६॥

तथा वयं देवपादानामन्वयागता भृत्या आपत्स्वपि पृष्ठगामिनो यद्यपि स्वमधिकारं न लभामहे तथापि देवपादानामेतद्युक्तं न भवति। उक्तं च—

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च।
नहि चूडामणिः पादे प्रभवामीति बध्यते ॥५७॥

यतः—

अनभिज्ञो गुणानां यो, न भृत्यैरनुगम्यते।
धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः॥५८॥

उक्तं च—

असमैः समीयमानः समैश्च परिहीयमाणसत्कारः।

---

१. वाक्—हस्तवता। अत्र झयो होऽन्यतरस्याम् इति हस्य वा पूर्वसवर्णः।

धुरि यो न युज्यमानस्त्रिभिरर्थपतिं[१] त्यजति भृत्यः ॥५९॥

यच्चाविवेकितया राजा भृत्यानुत्तमपदयोग्यान्हीनाधमस्थाने नियोजयति, न ते तत्रैव तिष्ठन्ति, स भूपतेर्दोषो न तेषाम्। उक्तं च—

कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते।
न स विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥६०॥

यच्च स्वाम्येवं वदति 'चिराद्दृश्यते', तदपि श्रूयताम्—

सव्यदक्षिणयो यत्र विशेषो नास्ति हस्तयोः।
कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत्[२] ॥६१॥
काचे मणिं मणौ काचो येषां बुद्धिर्विकल्पते।
न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥६२॥
परीक्षका यत्र न सन्ति देशे
नार्घन्ति रत्नानि समुद्रजानि।
आभीरदेशे किल चन्द्रकान्तं
त्रिभिर्वराटैर्विपणन्ति गोपाः ॥६३॥
निर्विशेषं यदा स्वामी समं भृत्येषु वर्तते।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥६४॥
न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना।
तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥६५॥
अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥६६॥

---

१. त्रिभिः कारणैरितिभावः।

२. विद्यमाना गतिरुपायो यस्य स—( जो सर्वथा लाचार नहीं )। वसेत्—अत्र शक्ति लिङ् च। वस्तुं शक्नुयादित्यर्थः।

शिरसा विधृता नित्यं स्नेहेन परिपालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥६७॥
राजा तुष्टो हि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥६८॥
एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ।
कुलीनाः शौर्यसंयुक्ताः शक्ता भक्ताः क्रमागताः ॥६९॥
योऽनाहूतः समभ्येति द्वारि तिष्ठति सर्वदा ।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥७०॥
अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च यः ।
यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥७१॥
ताडितोऽपि दुरुक्तोऽपि दण्डितो महीभुजा ।
यो न चिन्तयते पापं स भृत्योऽर्हो महीभुजाम् ॥७२॥
न गर्वं कुरुते माने नापमाने च तप्यते ।
स्वाकारं रक्षयेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥७३॥
न क्षुधा पीड्यते यस्तु निद्रया न कदाचन ।
न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥७४॥
श्रुत्वा सांग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति ।
प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥७५॥
सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् ।
नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥७६॥
सीमा संकोचमायाति वह्नौ चर्म इवाहितम् ।
स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥७७॥

तथा शृगालोऽयमिति मन्यमानेन ममोपरि स्वामिना यत्त्ववज्ञा क्रियते, तदप्ययुक्तम् । उक्तं च यतः—

कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात्।
काष्ठादग्निरहेः फणादपि मणि गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना॥७८॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा।
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि' ॥७९॥

पिङ्गलक आह--'भवत्वेवं तावत्। असमर्थः समर्थो वा चिरंतनस्त्वमस्माकं मन्त्रिपुत्रः, तद्विश्रब्धं ब्रूहि यत्किंचिद्वक्तुकामः।' दमनक आह--'देव, विज्ञाप्यं किंचिदस्ति।' पिङ्गलक आह--'तन्निवेदयाभिप्रेतम्।' सोऽब्रवीत्--

'अपि स्वल्पतरं कार्यं यद्भवेत्पृथिवीपतेः।
तन्न वाच्यं सभामध्ये प्रोवाचेदं बृहस्पतिः ॥८०॥

तदैकान्तिके मद्विज्ञाप्यमाकर्णयन्तु देवपादाः। यतः--

[1]षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरो भवेत्।
तस्मात्सर्वप्रयत्नेन षट्कर्णं[2] वर्जयेत्सुधीः ॥८१॥

अथ पिङ्गलकाभिप्रायज्ञा व्याघ्रद्वीपिवृकपुरःसुराः सर्वेऽपि तद्वचः समाकर्ण्य संसदि तत्क्षणादेव दूरीभूताः। ततश्च दमनक आह--उदकग्रहणार्थं प्रवृत्तस्य स्वामिनः किमिह निवृत्त्यावस्थानम्।' पिङ्गलक आह सविलक्षस्मितम्--'किंचिदपि।' सोऽब्रवीत्--'देव, यद्यनाख्येयं तत्तिष्ठतु। उक्तं च--

दारेषु किंचित् स्वजनेषु किंचिद्

---

१. षट् कर्णाः यत्र स षट् कर्णः, त्रिभिर्जनैः श्रुत इत्यर्थः।
२. षण्णां कर्णानां समाहारः षट् कर्णं--पुरुष त्रयं--वर्जयेत् मन्त्रणावसरे इति शेषः।

गोप्यं वयस्येषु सुतेषु किंचित् ।
युक्तं न वा युक्तमिदं विचिन्त्य
वदेद् विपश्चित् महतोऽनुरोधात्' ॥८२॥

तच्छ्रुत्वा पिङ्गलकश्चिन्तयामास—'योग्योऽयं दृश्यते । तत्कथयाम्येतस्याग्र आत्मनोऽभिप्रायम् । उक्तं च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखी भवति ॥८३॥

भो दमनक, शृणोषि शब्दं दूरान्महान्तम् ।' सोऽब्रवीत्—'स्वामिन्, शृणोमि । ततः किम् ।' पिङ्गलक आह—'भद्र, अहमस्माद्वनाद् गन्तुमिच्छामि ।' दमनक आह—कस्मात् ।' पिङ्गलक आह—'यतोऽद्यास्मद्वने किमप्यपूर्वं सत्त्वं प्रविष्टं, यस्यायं महाशब्दः श्रूयते । तस्य च शब्दानुरूपेण पराक्रमेण भाव्यम्' इति । दमनक आह—'यच्छब्दमात्रादपि भयमुपगतः स्वामी, तदप्ययुक्तम् । उक्तं च—

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्याद्भिद्यते स्नेहो, भिद्यते वाग्भिरातुरः[1] ॥८४॥

तन्न युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुम् । यतो भेरीवेणुवीणामृदङ्गतालपटहशङ्खकाहलादिभेदेन शब्दा अनेकविधा भवन्ति । तन्न केवलाच्छब्दमात्रादपि भेतव्यम् । उक्तं च—

अत्युत्कटे च रौद्रे च शत्रौ प्राप्ते न हीयते ।
धैर्यं यस्य, महीनाथो न स याति पराभवम् ॥८५॥
दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम् ।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ॥८६॥

तथा च ।

---

१. आतुरः—व्याकुलः ।' वाचा भिद्यते कातरः, इति पाठान्तरम् ।

यस्य न विपदि विषादः संपदि हर्षो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुत विरलम् ॥८७॥

तथा च ।

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥८८॥

अपि च ।

अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति ।
जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥८९॥

तदेवं ज्ञात्वा स्वामिना धैर्यावष्टम्भः कार्यः । न शब्दमात्राद्भेतव्यम् । उक्तं च—

पूर्वमेवं मया ज्ञात पूर्णमेतद्धि मेदसा ।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च' ॥९०॥

पिङ्गलक आह—'कथमेतत् ।' सोऽब्रवीत्—

## २. गोमायुदुन्दुभि कथा ।

कश्चिद्गोमायुर्नाम शृगालः क्षुत्क्षामकण्ठ इतस्ततः परिभ्रमन् वने सैन्यद्वयसंग्रामभूमिमपश्यत् । तस्यां च दुन्दुभेः पतितस्य वायुवशाद्वल्लीशाखाग्रैर्हन्यमानस्य शब्दमशृणोत् । अथ क्षुभितहृदयश्चिन्तयामास—'अहो, विनष्टोऽस्मि । तद्यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि, तावदन्यतो व्रजामि । अथवा नैतद्युज्यते सहसैव—

भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत् ।
कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥९१॥

तत्तावज्जानामि कस्यायं शब्दः ।' धैर्यमालम्ब्य विमर्शयन्यावन्मन्दं मन्दं गच्छति तावद्दुन्दुभिमपश्यत् । स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत् । भूयश्च हर्षादचिन्तयत्—'अहो, चिराद-

तदस्माकं महद्भोजनपतितम् । तन्नूनं प्रभूतमांसमेदोऽसृग्भिः परिपूरितं भविष्यति । ततः परुषचर्मावगुण्ठितं तत् कथमपि विदार्यो एकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः । परं चर्मविदारणतो दंष्ट्राभङ्गः समजनि । अथ निराशीभूतस्तद्दारुशेषमवलोक्य श्लोकमेनमपठत्—
'पूर्वमेव मया ज्ञातम्' इति । ततो 'न शब्दमात्राद्भेतव्यम् ।'

पिङ्गलक आह—'भोः, पश्यायं मम सर्वोऽपि परिग्रहो भयव्याकुलितमनाः पलायितुमिच्छति । तत्कथमहं धैर्यावष्टम्भं करोमि ।' सोऽब्रवीत्—'स्वामिन्, नैषामेष दोषः । यतः स्वामिसदृशा एव भवन्ति भृत्याः । उक्तं च

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥९२॥

तत्पौरुषावष्टम्भं कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेतच्छब्दस्वरूपं ज्ञात्वाऽऽगच्छामि । ततः पश्चाद्यथोचितं कार्यम्' इति । पिङ्गलक आह—'किं तत्र भवान् गन्तुमुत्सहते ।' स आह—'किं स्वाम्यादेशात् सुभृत्यस्य कृत्याकृत्यमस्ति । उक्तं च—

स्वाम्यादेशात् सुभृत्यस्य न भीः संजायते क्वचित् ।
प्रविशेन्मुखमाहेयं[1] दुस्तरं वा महार्णवम् ॥९३॥

तथा च ।

स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च ।
मन्यते न, स संधार्यो भूभुजा भूतिमिच्छता' ॥९४॥

पिङ्गलक आह—'भद्र, यद्येवं तद्गच्छ । शिवास्ते पन्थानः सन्तु' इति । दमनकोऽपि तं प्रणम्य संजीवकशब्दानुसारी प्रतस्थे ।

अथ दमनके गते भयव्याकुलमनाः पिङ्गलकश्चिन्तयामास— 'अहो,

---

१. अहिः सर्पः तस्येदं आहेयम् । इतश्चानिञः इति ढक् ।

न शोभनं कृतं मया, यत्तस्य विश्वासं गत्वाऽऽत्माभिप्रायो निवेदितः। कदाचिद्दमनकोऽयमुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्याद् भ्रष्टाधिकारत्वात्। उक्तं च—

ये भवन्ति महीपस्य संमानितविमानिताः।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा ॥ ९५ ॥

तत्तावदस्य चिकीर्षितं वेत्तुं स्थानान्तरं गत्वा प्रतिपालयामि। कदाचिद्दमनकस्तमादाय मां व्यापादयितुमिच्छति। उक्तं च—

न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि।
विश्वस्तास्त्वेव वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ९६ ॥

बृहस्पतेरपि प्राज्ञो न विश्वासे व्रजेन्नरः।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ९७ ॥

शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः।
राज्यलाभोद्यतो वृत्रः शक्रेण शपथैर्हतः ॥ ९८ ॥

एवं संप्रधार्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन्नेकाकी तस्थौ। दमनकोऽपि संजीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत्—'अहो, शोभनमापतितम्। अनेनैतस्य संधिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यतीति। उक्तं च—

न कौलीन्यान्न सौहार्दान्नृपो वाक्ये प्रवर्तते।
मन्त्रिणां, यावदभ्येति व्यसनं शोकमेव च[१] ॥ ९९ ॥

सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम्।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम् ॥ १०० ॥

यथा नेच्छति नीरोगः कदाचित्सुचिकित्सकम्।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति' ॥ १०१ ॥

---

१. 'मन्त्रिणां यावदाप्तं न व्यसनं शोक एव वा' इति पाठान्तरम्।





एवं विचिन्तयन्पिङ्गलकाभिमुखः प्रतस्थे । पिंगलकोऽपि तमायान्तं प्रेक्ष्य स्वाकारं[1] रक्षन्यथापूर्वमवस्थितः । दमनकोऽपि पिंगलकसकाशं गत्वा प्रणम्योपविष्टः । पिंगलक आह--'किं दृष्टं भवता तत्सत्त्वम् ।' दमनक आह--'दृष्टं स्वामिप्रसादात् ।' पिंगलक आह--'अपि सत्यम्[2]।' दमनक आह--'किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते । उक्तं च--

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानां च, विनश्येत स द्रुतं सुमहानपि ॥१०२॥



तथा च ।

सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तं देववत्पश्येन्न व्यलीकेन कर्हिचित् ॥१०३॥
सर्वदेवमयस्यापि विशेषो नृपतेरयम् ।
शुभाशुभफलं सद्यो नृपाद्' देवाद् भवान्तरे' ॥१०४॥

पिंगलक आह--'सत्यं दृष्टं भविष्यति भवता । न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन निपातितः । यतः—

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं
महान्महत्स्वेव करोति विक्रमम् ॥ १०५ ॥

अपि च ।

---

१. स्वमनोभावं गूहमानः, निर्भयमिवात्मानं दर्शयन्नित्यर्थः ।

२. वाक्यादौ अपि शब्दः प्रश्नार्थे ।

गण्डस्थलेषु[१] मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान्परिकोपमेति' ॥१०६॥

दमनक आह—'अस्त्वेवं स महात्मा, वयं कृपणाः, तथापि स्वामी यदि कथयति ततो भृत्यत्वे नियोजयामि ।' पिंगलक आह सोच्छ्वासम्—'किं भवाञ्शक्नोत्येवं कर्तुम् ।' दमनक आह—'किमसाध्यं बुद्धेरस्ति । उक्तं च—

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः ।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्'॥१०७॥

पिंगलक आह--'यद्येवं तर्ह्यमात्यपदेऽध्यारोपितस्त्वम् । अद्यप्रभृति प्रसादनिग्रहादिकं त्वयैव कार्यमिति निश्चयः ।'

अथ दमनकः सत्वरं गत्वा साक्षेपं तमिदमाह—'एह्येहीतो दुष्टवृषभ, स्वामी पिङ्गलकस्त्वामाकारयति । किं निःशङ्को भूत्वा मुहुर्मुहुर्नदसि वृथा' इति । तच्छ्रुत्वा संजीवकोऽब्रवीत्—'भद्र, कोऽयं पिङ्गलकः?' । दमनक आह—'किं स्वामिनं पिङ्गलकमपि न जानासि । तत् क्षणं प्रतिपालय । फलेनैव ज्ञास्यसि । नन्वयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति ।' तच्छ्रुत्वा गतायुषमिवात्मानं मन्यमानः संजीवकः परं विषादमगमत् । आह च—'भद्र, भवान्साधुसमाचारो वचनपटुश्च दृश्यते । तद्यदि मामवश्यं तत्र नयसि तदभयप्रदानेन स्वामिनः सकाशात्प्रसादः कारयितव्यः ।' दमनक आह—'भोः, सत्यमभिहितं भवता । नीतिरेषा । यतः—

पर्यन्तो लभ्यते भूमेः समुद्रस्य गिरेरपि ।

१. गण्डस्थलेषु प्रवहत्सु इति शेषः ।

न कथंचिन्महीपस्य चित्तान्तः केनचित्क्वचित् ॥१०८॥

तत्त्वमत्रैव तिष्ठ यावदहं तं समये दृष्ट्वा ततः त्वामानयामि' इति। तथानुष्ठिते दमनकः पिङ्गलकसकाशं गत्वेदमाह—'स्वामिन् न तत्प्राकृतं सत्त्वम्। स हि भगवतो महेश्वरस्य वाहनभूतो वृषभः' इति। मया पृष्ट इदमूचे—'महेश्वरेण परितुष्टेन कालिन्दीपरिसरे शष्पाग्राणि भक्षयितुं समादिष्टः। किं बहुना। मम प्रदत्तं भगवता क्रीडार्थं वनमिदम्।' पिङ्गलक आह सभयम्—'सत्यं ज्ञातं मयाधुना। न देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्ण एवंविधे वने निःशङ्का नदन्तो भ्रमन्ति। ततस्त्वया किमभिहितम्।' दमनक आह—'स्वामिन्, एतदभिहितं मया यदेतद्वनं चण्डिकावाहनभूतस्य मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य विषयीभूतम्[1]। तद्भवानभ्यागतः प्रियोऽतिथिः। तत्तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेयः इति। ततस्तेनापि सर्वमेतत्प्रतिपन्नम्। उक्तं च सहर्षम्—'स्वामिनः सकाशादभयदक्षिणा दापयितव्या' इति। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा पिङ्गलक आह—'साधु सुमते, साधु। मन्त्रिश्रोत्रिय, साधु। मम हृदयेन सह संमन्त्र्य भवतेदमभिहितम्[2]। तद्दत्ता मया तस्याभयदक्षिणा। परं सोऽपि मदर्थेऽभयदक्षिणां याचयित्वा द्रुततरमानीयताम्' इति। अथ साधु चेदमुच्यते—

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातके।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः' ॥१०९॥

दमनकोऽपि तं प्रणम्य संजीवकसकाशं प्रस्थितः सहर्षमचिन्तयत्—

१. अधिकारान्तर्गतम्। आधीनमित्यर्थः।
२. मया यदभिधेयं तदेव त्वयोक्तमिति यावत्

'अहो, प्रसादसमुखो नः स्वामी वचनवशगश्च संवृत्तः। तन्नास्ति धन्यतरो मम। उक्तं च--

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम्।
अमृतं राजसंमानममृतं क्षीरभोजनम् ॥११०॥

अथ संजीवकसकाशमासाद्य सप्रश्रयमुवाच--'भो मित्र, प्रार्थितोऽसौ मया भवदर्थे स्वामी अभयप्रदानम्। तद्विश्रब्धं गम्यतामिति। परं त्वया राजप्रसादमासाद्य मया सह समयधर्मेण[१] वर्तितव्यम्। न गर्वमासाद्य स्वप्रभुतया[२] विचरणीयम्। अहमपि तव सङ्केतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्योद्धरिष्यामि। एवं कृते द्वयोरप्यावयो राज्यलक्ष्मीर्भोग्या भविष्यति।

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम्।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव ॥१११॥

संजीवक आह--'भद्र, एवमेवैतत्। यद्भवताभिहितं तदेव मया कर्तव्यम्' इति। एवमभिहिते दमनकस्तमादाय पिङ्गलकसकाशमगमत्। आह च--'देव, एष मयाऽऽनीतः स संजीवकः। अधुना देवः प्रमाणम्।'

संजीवकोऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः। पिङ्गलकोऽपि तस्य पीनायतककुद्मतो नखकुलिशालंकृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—'अपि शिवं भवतः। कुतस्त्वमस्मिन्वने विजने समायातोऽसि।' तेनाप्यात्मवृत्तान्तः कथितः। यथा वर्धमानेन सह वियोगः संजातस्तथा सर्वं निवेदितम्। तच्छ्रुत्वा पिङ्गलकः

१. समयधर्मेण—शपथानुसारम् 'समयः शपथाचार कालसिद्धान्तसंविदः'
२. स्वप्रभुतया—अहं प्रभुरस्मि इति भावनया, स्वातन्त्र्येण इत्यर्थः।

सादरं तमुवाच--'वयस्य, न भेतव्यम् । मद्भुजपञ्जरपरिरक्षितेऽस्मिन् यच्छेच्छं त्वयाधुना वर्तितव्यम् । अन्यच्च नित्यं मत्समीपवर्तिना भाव्यम् । यतः कारणाद्बहपायं रौद्रसत्त्वनिषेवितं वनं गुरूणामपि सत्त्वानामसेव्यम्, कुतः शष्पभोजिनाम् ।'

एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्योदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः । ततश्च करटकदमनकनिक्षिप्तराज्यभारः संजीवकेन सह सुभाषितगोष्ठीमनुभवन्नास्ते । अथवा साध्विदमुच्यते—

यदृच्छयाप्युपनतं सकृत्सज्जनसंगतम् ।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥११२॥

संजीवकेनाप्यनेकशास्त्रावगाहनादुत्पन्नबुद्धिप्रागल्भ्येन स्तोकैरेवाहोभिर्मूढमतिः पिंगलको धीमांस्तथा कृतो, यथारण्यधर्माद्वियोज्य ग्राम्यधर्मेषु नियोजितः[1] । किं बहुना प्रत्यहं पिंगलकसंजीवकावेव केवलं रहसि मन्त्रयतः । शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति । करटकदमनकावपि प्रवेशं न लभेते । अन्यच्च सिंहपराक्रमाभावात्सर्वोऽपि मृगजनस्तौ च शृगालौ क्षुधाव्याधिबाधिता एकां दिशमाश्रित्य स्थिताः । उक्तं च—

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् ।
संत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥११३॥

तथा च—

अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः ।
वृत्तिभङ्गान्महीपालं त्यजन्त्येव हि सेवकाः ॥११४॥

अन्यच्च

कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः ।
कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥११५॥

---

१. पशुवधादेः अपनीय दया कारुण्यादिषु नियोजितः ।

तथा न केवलं सेवका इत्थंभूताः, परं समस्तमप्येतज्जगत् परस्परं भक्षणार्थं सामादिभिरुपायैस्तिष्ठति । तद्यथा—

देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः ।
वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥११६॥
सामान्यैःसज्जितैः पाशैः प्रतीक्षन्ते१ दिवानिशम् ।
उपजीवन्ति शक्त्या हि जलजा जलजानिव ॥११७॥

अथवा साध्विदमुच्यते—

सर्पाणां च खलानां च परद्रव्यापहारिणाम् ।
अभिप्राया न सिद्ध्यन्ति तेनेदं वर्तते जगत् ॥११८॥

ततः स्वामिप्रसादरहितौ क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते । तत्र दमनको ब्रूते—'आर्य करटक, आवां तावदप्रधानतां गतौ । एष पिङ्गलकः संजीवकानुरक्तः स्वव्यापारपराङ्मुखः संजातः । सर्वोऽपि परिजनो कुत्रापि गतः । तत्किं क्रियते ।' करटक आह—'यद्यपि त्वदीयवचनं न करोति तथापि स्वामी स्वदोषनाशाय वाच्यः । उक्तं च—

अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः ।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥११९॥

तथा च ।

मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः ।

१. इति श्लोकद्वयं परस्परसम्बद्धं । प्रतीक्षन्ते इति क्रियायाः सर्वत्र सम्बन्धः । तथा च क्ष्मापा देशानामुपरि प्रतीक्षन्ते—प्रतिपालयन्ति, ( आंख गाढे रखते हैं )। आतुराणामुपरि चिकित्सका—इत्येवमादिरन्वयो द्रष्टव्यः ।
जलजा—जले जाता मीनाः । लघुमत्स्यान महामत्स्या इव दुर्बलान् उपजीवितुमेव प्रबलानां प्रवृत्तिरस्मिन् लोके दृश्यते इति भावः ।

उन्मार्गं, वाच्यतां यान्ति महामात्राः[1] समीपगाः ॥१२०॥

तत्त्वयैष शष्पभोजी स्वामिनः सकाशमानीतः । तत्स्वहस्तेनाङ्गाराः कर्षिताः ।' दमनक आह—'सत्यमेतत् । ममायं दोषः, न स्वामिनः ।

करटक आह—'एवंविधे व्यतिकरे किं कर्तव्यमावयोः ।' दमनकोऽब्रवीत्—'एवंविधेऽपि समये मम बुद्धिस्फुरणं भविष्यति, येन संजीवकं प्रभोर्विश्लेषयिष्यामि । उक्तं च यतः—

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतः सृष्टा हन्ति राष्ट्रं सनायकम् ॥१२१॥

तदहं मायाप्रपञ्चेन गुप्तमाश्रित्य तं स्फोटयिष्यामि ।' करटक आह—'भद्र, यदि कथमपि तव मायाप्रवेशं पिङ्गलको ज्ञास्यति संजीवको वा, तदा नूनं विघात एव ।' सोऽब्रवीत्—'तात, मैवं वद । गूढबुद्धिभिरापत्काले विधुरेऽपि दैवे बुद्धिः प्रयोक्तव्या । नोद्यमस्त्याज्यः । कदाचिद् घुणाक्षरन्यायेन बुद्धेः साम्राज्यं भवति । उक्तं च—

त्याज्यं न धैर्यं विधुरेऽपि दैवे
धैर्यात्कदाचित्स्थितिमाप्नुयात् सः ।
याते समुद्रेऽपि हि पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥१२२॥

तथा च—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या

---

१. सचिवाः, हस्तिपकाध्यक्षाश्च । 'महामात्रः समृद्धे चामात्ये हस्तिपकाधिपे' इति मेदिनी ।

यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥१२३॥

तदेवं ज्ञात्वा सुगूढबुद्धिप्रभावेण यथा तौ द्वावपि न ज्ञास्यतः तथा मिथो वियोजयिष्यामि ।

तच्छ्रुत्वा करटक आह—'भद्र, अस्त्येवम् । परं तथापि महन्मे भयम् । यतो बुद्धिमान्सजीवको रौद्रश्च सिंहः । यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात् त वियोजयितुमसमर्थ एव ।' दमनक आह—'भ्रातः' असमर्थोऽपि समर्थ एव । उक्तं च —

उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥१२८॥

करटक आह—'कथमेतत् ।' सोऽब्रवीत्—

## ३. काकी कृष्ण सर्पकथा ।

अस्ति कस्मिंश्चित्प्रदेशे महान्न्यग्रोधपादपः । तत्र वायसदम्पती प्रतिवसतः स्म । अथ तयोः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति । ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वोचतुः—'भद्र, किमेवंविधे संजात आवयोः कर्तव्यं भवति । एवं तावद्दुष्टात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्यावयोर्बालकान्भक्षयति । तत्कथ्यतां तद्रक्षार्थं कश्चिदुपायः ।

यस्य क्षेत्रं नदीतीरे भार्या च कटुभाषिणी ।
ससर्पे च गृहे वासः कथं स्यात्तस्य निर्वृतिः ॥१२४॥

अन्यच्च ।

सर्पयुक्ते गृहे वासो मृत्युरेव न संशयः ।
यद्ग्रमान्ते वसेत्सर्पस्तस्य स्यात्प्राणसंशयः ॥१२५॥

अस्माकमपि तत्रस्थितानां प्रतिदिनं प्राणसंशयः' । स आह—'नात्र

विषये स्वल्पोऽपि विषादः कार्यः । नूनं स लुब्धो नोपायमन्तरेण वध्यः स्यात् ।

उपायेन जयो यादृग्रिपोस्तादृङ् न हेतिभिः ।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥१२६॥

तथा च ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात्' ॥१२७॥

तावूचतुः--'कथमेतत् ।' सोऽब्रवीत्--

## ५. बक कुलीरक कथा ।

अस्ति कस्मिंश्चिद्वनप्रदेशे नानाजलचरसनाथं महत्सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान् व्यापादयितुमसमर्थः । ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलप्रकरसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन् रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे—'माम, किमद्य त्वया नाहारवृत्तिरनुष्ठीयते, केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते ।' स आह—'वत्स, सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया सांप्रतं प्रायोपवेशनं[1] कृतम् । तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि ।' कुलीरकस्तच्छ्रुत्वा प्राह--'माम, किं तद्वैराग्यकारणम् ।' स प्राह--'वत्स, अहमस्मिन्सरसि जातो

---

१. प्रायेण मृत्युनिमित्तकानशनेन उपवेशनं स्थितिः । [ आमरण उपवास, भूख हड़ताल ] ।

वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः संपद्यते लग्ना ।' कुलीरक आह--'कस्मात्तच्छ्रुतम् ।' बक आह--'दैवज्ञमुखात् । एष शनैश्चरो हि रोहिणीशकटं भित्त्वा भौमं शुक्रं च प्रयास्यति ।

तदेतत्सरः स्वल्पतोयं वर्तते । शीघ्रं च शोषं यास्यति । अस्मिञ्शुष्के यैः सहाहं वृद्धिं गतः, सदैव क्रीडितश्च, ते सर्वे तोयाभावान्नाशं यास्यन्ति । तत्तेषां वियोगं द्रष्टुमहमसमर्थः । तेनैतत्प्रायोपवेशनं कृतम् । सांप्रतं सर्वेषांस्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते । केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः[१] स्वयमेव गच्छन्ति । अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति । तेनाहं विशेषाद्रोदिमि, यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति ।' ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः--'माम, अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति ।' बक आह--'अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखण्डमण्डितं[२] यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेष्यति । तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि ।'

अथ ते तत्र विश्वासमापन्नाः 'तात, मातुल, भ्रातः' इति ब्रुवाणाः

---

१ शिशुमारः-'सुइस', । जलहस्ती--'दरयाई घोड़ा या बड़ी मछली ।'

२. पद्मिनीनां पद्मलतानां खण्डैः समूहैः मण्डितं शोभमानम् ।

'अहं पूर्वमहं पूर्वम्' इति समन्तात्परितस्थुः। सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठ आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासंदेशकैर्मनांसि रञ्जयन्नित्यामिषाहारवृत्तिमकरोत्।

अन्यस्मिन्दिने च कुलीरकेणोक्तः 'माम, मया सह ते प्रथमः स्नेहसभाषः संजातः। तत्किं मां परित्यज्यान्यान्नयसि। तस्मादद्य मे प्राणत्राणं कुरु।' तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्—'निर्विण्णोऽहं मत्स्यमांसादनेन। तदद्यैन कुलीरकं व्यञ्जनस्थाने[1] करोमि।' इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः। कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयं[2] मवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्—'माम, कियद्दूरे स जलाशयः। मदीयभारेणातिश्रान्तस्त्वम्। तत्कथय।' सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह—'कुलीरक, कुतोऽन्यो जलाशयः। मम प्राणयात्रेयम्[3]। तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता। त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि।' इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च।

अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः— भोः कुलीरक, किं निवृत्तस्त्वम्। स मातुलोऽपि नायातः। तत्किं चिरयति। वयं सर्वे सोत्सुकाः कृत-

१. व्यञ्जनं तेमनं तत्स्थानीयं करोमि। साग सब्जी के रूप में सेवन करूंगा।

२. शिला आश्रयः यस्य तम्। शिलायां संचितमित्यर्थः।

३. प्राणयात्रा—जीवनोपायः।

क्षणास्तिष्ठामः ।[१] एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच—'मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन्मयायुः शेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता । तदलं संभ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति ।' अतोऽहं ब्रवीमि—'भक्षयित्वा बहून्मत्स्यान्' इति ।

वायस आह— 'भद्र, तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति ।' शृगाल आह—'गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम् । तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप, येन सर्पस्तद्ग्रहणेन वध्यते ।'

अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ । ततश्च काकी किंचित्सरः प्राप्य यावत्पश्यति, तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नन्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते । अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे । ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य गृहीतलगुडाः सत्वरमनुययुः । काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता । अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति, तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति[२] । ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः । वायसदम्पती अपि ततः परं सुखेन वसतः । अतोऽहं ब्रवीमि—'उपायेन हि यत्कुर्यात्' इति । तन्न किंचिदिह बुद्धिमतामसाध्यमस्ति । उक्तं च—

---

१. कृतः क्षणः समयः यैः ते कृतक्षणाः तिष्ठामः, अवसरं प्रतीक्षामहे इत्यर्थः ।
२. प्रसारितः भोगः फणा येन सः ।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
वने सिंहो मदोन्मत्तः शशकेन निपातितः' ॥ १२८ ॥

करटक आह—'कथमेतत् ।' स आह—

## ५. सिंहशशक–कथा ।

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म । अथासौ वीर्यातिरेकान्नित्यमेवानेकान् मृगशशकादीन् व्यापादयन् नोपरराम । अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः- 'स्वामिन्, किमनेन सकलमृगवधेन नित्यमेव, यतस्तवैकेनापि मृगेण तृप्तिर्भवति । तत्क्रियतामस्माभिः सह समयधर्मः[१]। अद्यप्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति । एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यति । अस्माकं च पुनः सर्वोच्छेदनं न स्यात् । तदेवं राजधर्मोऽनुष्ठीयताम् । उक्तं च—

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥१२९॥

प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् ।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥१३०॥

अजामिव प्रजां मोहाद्यो हन्यात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथंचन[२] ॥१३१॥

नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित्[३]॥१३२॥

---

१. समयधर्मः—प्रतिज्ञाबन्धः । ( समझौता. सौदा ) ।
२. एक वार मेव तृप्तिर्जायते न द्वितीयं वारम् इत्यर्थः ।
३. नृप एव दीपः इति रूपकम् । एवमन्यत्रापि । स्नेहः—तैलं । गुणः—दान-मानादिः, वर्तिश्च ।

यथा बीजांकुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥१३३॥
लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः ।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः॥१३४॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—'अहो सत्यमभिहितं भवद्भिः। परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः श्वापदः समागमिष्यति, तन्नूनं सर्वानपि भक्षयिष्यामि।' अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति। वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमय उपतिष्ठते।

अथ कदाचिज्जातिक्रमाच्छशकस्यावसरः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन् वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्टः। यावत्कूपोपरि याति तावत्कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श। दृष्ट्वा च तेन हृदये चिन्तितम्— 'यद्भव्य उपायोऽस्ति। अहं भासुरकं प्रकोप्य स्वबुद्ध्याऽस्मिन्कूपे पातयिष्यामि' अथासौ दिनशेषे भासुरकसमीपं प्राप्तः।

सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्किणी परिलेलिहद् व्यचिन्तयत्—'अहो, प्रातराहाराय निःसत्त्वं वनं मया कर्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः।

अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह— 'रे शशकाधम, एकतस्तावत्त्वं लघुः प्राप्तोऽपरतो वेलातिक्रमेण। तदस्मादपराधात्त्वां

१. निर्वृतिं भजन्ते इति निर्वृतिभाजः—शान्तिमापन्नाः सुखिनो वा।

निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि'। अथ शशकः सविनयं प्रोवाच—'स्वामिन्, नापराधो मम, न च सत्त्वानाम्। तच्छ्रूयतां कारणम्।' सिंह आह—'सत्वरं निवेदय यावन्मम दंष्ट्रान्तर्गतो न भवान्भविष्यति' इति। शशक आह—'स्वामिन्, समस्तमृगस्य जातिक्रमेण मम लघुतरस्य प्रस्तावं[1] विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः—'रे, क्व प्रस्थिता यूयम्। अभीष्टदेवतां स्मरत।' ततो मयाभिहितम्—'वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण[2] गच्छामः।' ततस्तेनाभिहितम्—'यद्येवं तर्हि मदीयमेतद्वनम्। मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा, ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ। येन यः कश्चिदावयोर्मध्यात्पराक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यति'। ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः। एतद्वेलाव्यतिक्रमकारणम्। तदत्र स्वामी प्रमाणम्।'

तच्छ्रुत्वा भासुरक आह—'भद्र, यद्येवं तत्सत्वरं दर्शय मे तं चौरसिंहं, येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि। शशक आह—'स्वामिन्, सत्यमिदम्। स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः। परं स दुर्गाश्रयः। दुर्गान्निष्क्रम्य वयं तेन

१. प्रस्तावः–अवसरः, वार इत्यर्थः।
२. समयधर्मेण–प्रतिज्ञानुसारम्।
३. विश्वासस्थाने–स्वोक्तिप्रत्यायनार्थम् (विश्वास दिलाने के लिए धरोहर के रूप में)

विष्कम्भिताः । ततो दुर्गस्थो दुःसाध्यो भवति रिपुः । उक्तं च—

न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
यत्कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिद्ध्यति ॥१३५॥
शतमेकोऽपि संधत्ते[1] प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥१३६॥
दंष्ट्राविरहितो नागो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः' ॥१३७॥

तच्छ्रुत्वा भासुरक आह—'भद्र, दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि । उक्तं च—

जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥१३८॥

तथा च ।

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वत्स्र्यन्तावामयः[2] स च ॥१३९॥

अपि च ।

उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात् पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसा-
वसाध्यतां व्याधिरिव प्रयाति ॥१४०॥

शशक आह—'अस्त्येतत् । तथापि बलवान्स मया दृष्टः । तन्न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् ।

भासुरक आह—'भोः, किं तवानेन व्यापारेण । दर्शय मे तं दुर्ग-

---

१. संधत्ते—लक्ष्यीकरोति । ( मुकाबला करता है ) ।
२. वत्स्र्यन्तौ—वर्धमानौ । आमयः—रोगः । स—शत्रु रितिभावः ।

स्यमपि ।' अथ शशक आह--'यद्येवं तर्ह्यागच्छतु स्वामी ।' एवमुक्त्वाग्रे व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत्तमेव कूपमासाद्य भासुरकमाह—'स्वामिन्, कस्ते प्रतापं सोढुं समर्थः । त्वां दृष्ट्वा दूरितोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम् । तदागच्छ येन दर्शयामि' इति । भासुरक आह—'दर्शय मे दुर्गम् ।' तदनु दर्शितस्तेन कूपः । ततः सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नादः समुत्थितः । अथ तेन तं शत्रुं मत्वाऽऽत्मानं तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः । शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म । अतोऽहं ब्रवीमि—'बुद्धिर्यस्य बलं तस्य' इति ॥

तद्यदि भवान्कथयति, तत्तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं करोमि ।' करटक आह--'भद्र, यद्येवं तर्हि गच्छ । शिवास्ते पन्थानः सन्तु । यथाभिप्रेतमनुष्ठीयताम् ।'

अथ दमनकः संजीवकवियुक्तं पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः । पिङ्गलकोऽपि तमाह--'भद्र, किं चिराद् दृष्टः । दमनक आह--'न किंचिद्देवपादानामस्माभिः प्रयोजनम्, तेनाहं नागच्छामि । तथापि राजप्रयोजनविनाशमवलोक्य संदह्यमानहृदयो व्याकुलतया स्वयमेवाभ्यागतो वक्तुम् ।

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह—'किं वक्तुमना भवान् । तत्कथ्यतां यत्कथनीयमस्ति ।' स प्राह—'देव, संजीवको युष्मत्पादानामुपरि द्रोहबुद्धिरिति[१] । विश्वासगतस्य मम

---

१. द्रोहाय बुद्धिर्यस्य स ।

विजन इदमाह—'भो दमनक, दृष्टा मयास्य पिङ्गलकस्य सारासारता।[१] तदहमेनं हत्वा सकलमृगाधिपत्य त्वत्साचिव्यपदवीसमन्वितं करिष्यामि। पिङ्गलकोऽपि तद्वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किंचिदप्युक्तवान्। दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान्—'अयं तावत्संजीवकनिबद्धरागः, तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यति' इति। उक्तं च—

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं[२] यदा
तं मोहाच्छ्रयते मदः, स च मदादास्येन निर्विद्यते।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यते ॥ १४१ ॥

तत्किमत्र युक्तम्' इति। पिङ्गलकोऽपि चेतनां समासाद्य कथमपि तमाह—'संजीवकस्तावत्प्राणसमो भृत्यः। स कथं ममोपरि द्रोहबुद्धिं करोति।' दमनक आह—'देव, भृत्यो भृत्य इति नैकान्तिकमेतत्।[३] उक्तं च—

न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम्।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते[४] ॥ १४२ ॥

पिङ्गलक आह—'भद्र तथापि मम तस्योपरि चित्तवृत्तिर्न विकृतिं

१. सारश्चासारश्च सारासारौ तयोर्भावः सारासारता, बलाबलौ इत्यर्थः।
२. प्रमाणभूतं सर्वाधिकारिणमित्यर्थः।
३. एकान्तिकं—नियतम्। भृत्यः सदा भृत्यभावमेव भजते, न कदाचिदपि ततो व्यभिचरतीति नास्ति नियमः। सोऽपि कदाचित् भृत्यभावं जहाति इति भावः।
४. स पुरुषो नास्ति यो राज्ञां श्रियं राजलक्ष्मीं न कामयते। यद्वा स राज्ञां

यातिः[1] । अथवा साध्विदमुच्यते--

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ १४३ ॥

दमनक आह--'अत एवायं दोषः । उक्तं च--

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ १४४ ॥

अपरं केन गुणविशेषेण स्वामी संजीवकं निर्गुणकमपि निकटे धारयति । अथ देव, यद्येवं चिन्तयसि महाकायोऽयम् । अनेन रिपून् व्यापादयिष्यामि । तदस्मान्न सिध्यति, यतोऽयं शष्पभोजी । देवपादानां पुनः शत्रवो मांसाशिनः । तद्रिपुसाधनमस्य साहाय्येन न भवति । तस्मादेनं दूषयित्वा[2] हन्यताम्' इति । पिङ्गलक आह--

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ १४५ ॥

अन्यच्च । मयास्य तव वचनेनाभयप्रदानं दत्तम् । तत्कथं स्वयमेव व्यापादयामि । सर्वथा संजीवकोऽयं सुहृदस्माकम् । न तं प्रति कश्चिन्मन्युरिति । उक्तं च--

इतः[3] स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ १४६ ॥

---

पुरुषः--नृपतीनां भृत्यः राजसेवक इत्यर्थः नास्ति, यः श्रियं--राजलक्ष्मीं न कामयते--इत्यन्वयो वोद्धव्यः । सर्वोऽपि राजलक्ष्मीं वाञ्छन्ति इत्यर्थः । किन्तु अशक्ताः एव असमर्थत्वाद् राजानंपर्युपासते--भृत्यतया सेवन्ते ।

१. मम हृदये तं प्रति विरोधभावो नोदेतीतिभावः ।

२. दूषयित्वा--दोषमारोप्य ।

३. इतः--अस्मात् , प्रजापतेरिव मत्तारित्यर्थः ।

आदौ न वा प्रणयिनां[1] प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः ।
उत्क्षिप्य यत्क्षिपति तत् प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति[2] ॥१४७॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥१४८॥

तद् द्रोहबुद्धेरपि मयाऽस्य न विरुद्धमाचरणीयम् ।' दमनक आह—'स्वामिन्, नैष राजधर्मो यद्द्रोहबुद्धेरपि क्षम्यते । उक्तं च—

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥१४९॥

अपरं त्वयास्य सखित्वात्सर्वोऽपि राजधर्मः परित्यक्तः । राजधर्माभावात्सर्वोऽपि परिजनो विरक्तिं गतः । यः संजीवकः सः शष्पभोजी, भवान्मांसादः, तव प्रकृतयश्च । अतोऽलब्धमांसभोजनास्तास्त्वां त्यक्त्वा यास्यन्ति । ततोऽपि त्वं विनष्ट एव । अस्य संगतया पुनस्तेन कदाचिदाखेटके मतिर्भविष्यति । उक्तं च—

यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते ।
कदाचिन्नात्र संदेहस्तादृग्भवति पूरुषः ॥१५०॥

तथा च ।

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते ।
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं

---

१. प्रणयिनां 'उपरि' इति शेषः ।
२. यथा भूमौ स्थितो न पतति, तथैव स्नेहानुबन्धाभावे तन्नाशजं दुःखं नास्त्येव इत्यर्थः ।

प्रायेणाधममध्यमोत्तमगुणः संवासतो[1] जायते ॥१५१॥

तथा च ।

असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥१५२॥

अतएव सन्तो नीचसङ्गं वर्जयन्ति । उक्तं च—

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः ।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी' ॥१५३॥

पिङ्गलक आह—'कथमेतत् ।' सोऽब्रवीत्—

## ८. मन्दविसर्पिणी-मत्कुणकथा ।

अस्ति कस्यचिन्महीपतेः कस्मिंश्चित्स्थाने मनोरमं शयनस्थानम् । तत्र शुक्लतरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति स्म । सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति । अन्येद्युश्च तत्र शयने क्वचिद्भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः । अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच—'भो अग्निमुख, कुतस्त्वमत्रानुचितस्थाने समायातः । तद्यावन्न कश्चिद्वेत्ति, तावच्छीघ्रं गम्यताम्' इति । स आह—'भगवति, गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम् । उक्तं च—

एह्यागच्छ, समाश्रयासनमिदं, कस्माच्चिराद्दृश्यसे,
का वार्ता, न्वतिदुर्बलोऽसि, कुशलं? प्रीतोऽस्मि ते दर्शनात् ।

---

१ अत्र पञ्चम्यास्तसिल ।

एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा[१]
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥१५४॥

अपरं मयाऽनेकमानुषाणामनेकविधानि रुधिराण्यास्वादितानि अहार-दोषात्कटुतिक्तकषायाम्लरसास्वादानि, न च मया कदाचिन्मधुररक्त समास्वादितम्। तद्यदि त्वं प्रसादं करोषि, तदस्य नृपतेर्विविधव्य-ञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशाद् अस्य शरीरे यन्मिष्टं रक्तं संजातम्, तदास्वादनेन सौख्यं संपादयामि जिह्वायाः' इति। उक्तं च--

यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः ॥१५५॥

तन्मया गृहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनमर्थनीयम्, तन्न त्वयैकाकिन्याऽस्य भूपतेः रक्तभोजनं कर्तुं युज्यते।' तच्छ्रुत्वा मन्दविसर्पिण्याह--'भो मत्कुण, अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि। पुनस्त्वमग्निमुखश्चपलश्च। तद्यदि मया सह र[क्त]पानं करोषि तत्तिष्ठ। अभीष्टतरं रक्तमास्वादय।' सोऽब्रवीत्--'भगवति, एवं करिष्यामि। यावत्त्वं नास्वादयसि प्रथमं नृपरक्तम्, तावन्मम देवगुरुकृतः शपथः स्यात्, यदि तदास्वादयामि।' एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः।

अथासौ मत्कुणो जिह्वालौल्यप्रकृष्टौत्सुक्याज्जाग्रतमपि तं मही-पतिमदशत्। अथवा साध्विदमुच्यते--

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।

---

१. नीचजनेऽपि सतां गृहं प्राप्ते (सति) एवं सर्वदा युज्यति इत्यन्वयः। युज्यति इत्यत्र अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति परस्मैपदम्। स्मार्तैः-स्मृतिशास्त्रवेदिभिः। लघुः तुच्छः साधारण इत्यर्थः सन्नपि स्वर्गप्रदो वर्तते।

सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ १५६ ॥

यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः ।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ १५७ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः—'अहो, ज्ञायतामत्र प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति, येनाहं दष्टः' इति। अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या वीक्षांचक्रुः। अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तः प्रविष्टः। सा मन्दविसर्पिण्यपि वस्त्रसंध्यन्तर्गता तैर्दृष्टा, व्यापादिता च। अतोऽहं ब्रवीमि 'न ह्यविज्ञातशीलस्य' इति।

एवं ज्ञात्वा त्वयैष वध्यः। नोचेत् त्वां व्यापादयिष्यति। उक्तं च—

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति यथा राजा ककुद्रुमः' ॥ १५८ ॥

पिङ्गलक आह—'कथमेतत्।' सोऽब्रवीत्—

## ७ चण्डरव शृगाल कथा।

कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित्क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः सारमेया अवलोक्य सर्वतः शब्दायमानाः परिधाव्य तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णमहाभाण्डं सज्जीकृतमासीत्। तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः। अथ यावन्निष्क्रान्तस्ता-

वन्नीलीवर्णः संजातः। तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टदिशं जग्मुः। चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे। न च नीलवर्णेन कदाचिन्निजरङ्गस्त्यज्यते।

अथ तं अपूर्वसत्त्वमवलोक्य सर्वे सिंहव्याघ्रवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति। कथयन्ति च—'न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषं च। तद्दूरतरं गच्छामः। उक्तं च—

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम्।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः'॥ १६९॥

चण्डरवोऽपि तान्भयव्याकुलितान्विज्ञायेदमाह—'भो भोः श्वापदाः, किं यूयं मां दृष्ट्वैव संत्रस्ता व्रजथ। तन्न भेतव्यम्। अहं ब्रह्मणाऽद्य स्वयमेव सृष्ट्वाऽभिहितः—'यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति। तत्त्वं मयाद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तः ककुद्रुमाभिधः। ततो गत्वा क्षितितले तान्सर्वान्परिपालय' इति। ततोऽहमत्रागतः। तन्मम छत्रच्छायायां सर्वैरेव श्वापदैर्वर्तितव्यम्। अहं ककुद्रुमो नाम राजा त्रैलोक्येऽपि संजातः। तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः[1] 'स्वामिन्, प्रभो, समादिश' इति वदन्तस्तं परिवव्रुः।

अथ तेन सिंहस्यामात्यपदवी प्रदत्ता। व्याघ्रस्य शय्यापालत्वम्। द्वीपिनस्ताम्बूलाधिकारः। वृकस्य द्वारपालकत्वम्। ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति। शृगालाः सर्वेऽप्यर्धचन्द्रं दत्त्वा निःसारिताः।

एवं तस्य राज्यक्रियायां वर्तमानस्य ते सिंहादयो मृगान्व्यापाद्य

1. श्वापदाः—सिंहादयोऽरण्यचारिणः पशवः।

तत्पुरतः प्रक्षिपन्ति । सोऽपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति। एवं गच्छति काले कदाचित्तेन सभागतेन दूरदेशे शब्दायमानस्य श्रृगालवृन्दस्य कोलाहलोऽश्रावि। तं शब्दं श्रुत्वा पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय तारस्वरेण विरोतमारब्धवान् । अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य श्रृगालोऽयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः—'भोः, वाहिताः[1] वयमनेन क्षुद्रश्रृगालेन । तद्वध्यताम्' इति । सोऽपि तदाकर्ण्य पलायितुमिच्छँस्तत्र स्थान एव सिंहादिभिः खण्डशः कृतो मृतश्च । अतोऽहं ब्रवीमि – 'त्यक्ताश्चाभ्यन्तरा येन' इति ।

तदाकर्ण्य पिङ्गलक आह—'भो दमनक, कः प्रत्ययोऽत्र[2] विषये यत्स ममोपरि दुष्टबुद्धिः ।' स आह—'यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि, तदत्रैव प्रत्ययः । प्रभातेऽवसरवेलायाम्[3] आरक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति । एवं ज्ञात्वा यदुचितं तत्कर्तव्यम् ।' इति कथयित्वा संजीवकसकाशं गतस्तं प्रणम्योपविष्टः ।

संजीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच—'भो मित्र, स्वागतम् । चिराद्दृष्टोऽसि । अपि शिवं भवतः ? तत्कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि ।

दमनक आह—'भोः कथं शिवं सेवकजनस्य । तथा च—

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ १७० ॥

---

१. वाहिताः—भृत्यत्वं कारिताः ।
२. प्रत्ययः—प्रमाणम् ।
३. अवसर वेलायाम्—राजदर्शनावसारकाले इत्यर्थः ।

जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥१७१॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम् ।
स्वच्छन्दं चरति श्वाऽत्र, सेवकः परशासनात् ॥१७२॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥१७३॥

संजीवक आह--'अथ भवान्किं वक्तुमनाः ।' सोऽब्रवीत्—'मित्र, सचिवानां मन्त्रभेदं कर्तुं न युज्यते । उक्तं च--

यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये संनियोजितः ।
स हत्वा नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥१७४॥

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः । यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च ।

तत्तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः । कथितं चाद्यानेन मत्पुरतश्चतुष्कर्णतया[१]—'यत्प्रभाते संजीवकं हत्वा समस्तमृगपरिवारं चिरात्तृप्तिं नेष्यामि ।' ततः स मयोक्तः—'स्वामिन्, न युक्तमिदं यन्मित्रद्रोहेण जीवनं[२] क्रियते !

ततस्तेनाहं सामर्षेणोक्तः—'भो दुष्टबुद्धे, संजीवकस्तावच्छष्पभोजी, वयं मांसाशिनः । तदस्माकं स्वाभाविकं वैरम् ।' इति कथं रिपुरुपेक्ष्यते । तस्मात्सामादिभिरुपायैर्हन्यते । न च हते तस्मिन्दोषः

१. चत्वारः कर्णा यस्मिंस्तस्य भावः तत्ता तया । पुरुषत्रयेणैव ( वक्त्रा श्रोत्रा च ) श्रोतव्यत्वेन इत्यर्थः ।

२. जीवनं—आजीविका, आत्मनः भरणपोषणमित्यर्थः ।

स्यात्। उक्तं च--

कृत्याकृत्यं न मन्येत क्षत्रियो युधि संगतः।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥१७५॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः। सांप्रतं मे नास्ति विश्वासघातकदोषः। मया सुगुप्तमन्त्रस्तव निवेदितः। अथ यत्ते प्रतिभाति तत्कुरुष्व' इति। अथ संजीवकस्तस्य तद्वज्रपातदारुणं वचनं श्रुत्वा मोहमुपागतः। अथ चेतनां लब्ध्वा सवैराग्यमिदमाह--'भोः, साध्विदमुच्यते--

अहं हि संमतो राज्ञो य एवं मन्यते कुधीः।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥१७६॥

वरं वनं, वरं भैक्ष्यं, वरं भारोपजीवनम्।
वरं व्याधिर्मनुष्याणां, नाधिकारेण[1] संपदः ॥१७७॥

तदयुक्तं मया कृतं यदनेन सह मैत्री विहिता। उक्तं च--

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥१७८॥

तथा च--

मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥१७९॥

तद्यदि गत्वा तं प्रसादयामि, तथाऽपि न प्रसादं यास्यति। उक्तं च--

१. सचिवादिकं अधिकारं आश्रित्य संपदः न वरमित्यर्थः।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रशाम्यति ।
अकारणद्वेषपरो हि यो भवेत्
कथं नरस्तं परितोषयिष्यति ॥ १८० ॥

अहो, साधु चेदमुच्यते—

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां[१]
सेवासंव्यवहारतत्त्वविदुषां[२] द्रोहच्युतानामपि ।
व्यापत्तिः स्खलितान्तरेषु[३] नियता, सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ १८१ ॥

तथा च—

भावस्निग्धै[४]रुपकृतमपि द्वेष्यतां याति लोके
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति ।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १८२ ॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः । तेनायं ममादोषस्याप्येवं[५] वदति ।

---

१. परेषां हिताः-हितकराः ये व्यापाराःकार्याणि तेषु यक्तः आत्मा येषां तेषाम्; दूसरों के हितकारी कार्यों में अपने आप को लगा देने वाले ।

२. सेवायाः संव्यवहारस्य-सम्यगनुष्ठानस्य यत् तत्वं-मर्म तेषु विद्वांसः इति तेषाम् । सेवा करने के मर्म को जानने वाले ।

३. स्खलितान्तरेषु-अल्पीमस्यामपि त्रुटौ ।

४. भावेन-हृदयेन स्निग्धैः प्रीतिमद्भिः, हार्दिकस्नेहशीलैः पुरुषैः उपकृतं—कृतः उपकारः । अत्र भावे क्तः । तथैव अपकृतं=कृतोऽपकारः ।

५. निर्दोस्यापि 'सम्बन्धे' इति शेषः ।

भवति चैवं यद्गुणवत्सु समीपवर्तिषु गुणहीनानां न प्रसादो भवति। उक्तं च--

गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति' ॥ १८३ ॥

दमनक आह--'भो मित्र, यद्येवं तन्नास्ति ते भयम्। प्रकोपितोऽपि स दुर्जनैस्तव वचनरचनया प्रसादं यास्यति'। स आह--'भोः, न युक्तमुक्तं भवता। लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते। उपायान्तरं विधाय ते नूनं घ्नन्ति। उक्तं च--

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा' ॥ १८४ ॥

दमनक आह--'कथमेतत्'। सोऽब्रवीत्--

## ८. उष्ट्रकाकादिकथा।

कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्य चानुचरा अन्ये द्वीपिवायसगोमायवः सन्ति। अथ कदाचित्तैरितस्ततो भ्रमद्भिः सार्थभ्रष्टः क्रथनको नामोष्ट्रो दृष्टः। अथ सिंह आह--'अहो, अपूर्वमिदं सत्त्वम्! तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वा' इति। तच्छ्रुत्वा वायस आह--'भो स्वामिन्, ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः। तद्व्यापाद्यताम्।' सिंह आह--'नाहं गृहमागतं हन्मि। उक्तं च--

गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।
यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥ ८५ ॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येनास्यागमनकारणं पृच्छामि।

अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो निवेदितः। ततः सिंहेनोक्तम्—'भोः क्रथनक, मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रैवारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन् मया सह सदैव वस'। सोऽपि 'तथा' इत्युक्त्वा तेषां मध्ये विचरन्न कुतोऽपि भयमिति सुखेनास्ते।

अथान्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा सह युद्धमभवत्। ततस्तस्य दन्तमुशलप्रहारैर्व्यथा संजाता। व्यथितः कथमपि प्राणैर्न वियुक्तः।

अथ शरीरासामर्थ्यान्न कुत्रचित्पदमपि चलितुं शक्नोति। तेऽपि सर्वे काकादयोऽप्रभुत्वेन[१] क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान्सिंहः प्राह—'भोः, अन्विष्यतां कुत्रचित्किंचित्सत्त्वं येनाहमेतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं संपादयामि'।

अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किंचित्सत्त्वं पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः। शृगाल आह—'भो वायस, किं प्रभूतभ्रान्तेन। अयमस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति। तदेनं हत्वा प्राणयात्रां कुर्मः।' वायस आह—'युक्तमुक्तं भवता। परं स्वामिना तस्याभयप्रदानं दत्तमास्ते न वध्योऽयमिति। शृगाल आह—'भो वायस, अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति। तत्तिष्ठन्तु भवन्तोऽत्रैव, यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा चागच्छामि।' एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः।

---

१. प्रभुप्रसादलाभाभावेन, अशक्तत्वाच्च।

अथ सिंहमासाद्येदमाह--'स्वामिन्, समस्तं वनं भ्रान्त्वा वयमागताः। न किंचित्सत्त्वमासादितम्। तत्किं कुर्मो वयम्। संप्रति वयं बुभुक्षया पदमेकमपि प्रचलितुं न शक्नुमः। देवोऽपि पथ्याशी[१] वर्तते। तद्यदि देवादेशो भवति तत्क्रथनकपिशितेनाद्य पथ्यक्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह--'धिक्पापाधम, यद्येवं भूयोऽपि वदसि, ततस्त्वां तत्क्षणमेव वधिष्यामि। यतो मया तस्याभयं प्रदत्तम्, तत्कथं व्यापादयामि। उक्तं च

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्वभयप्रदानम्' ॥१८६॥

तच्छ्रुत्वा श्रृगाल आह--'स्वामिन्, यद्यभयप्रदानं दत्त्वा वधः क्रियते तदैव दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति तन्न दोषः। ततो यदि स स्वयमेवात्मानं वधाय नियोजयति तद्वध्यः। अन्यथास्माकं मध्यादेकतमो वध्य इति। यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां दशां यास्यन्ति। तत्किमेतैः प्राणैरस्माकं ये स्वाम्यर्थे न यास्यन्ति। अपरं पश्चादप्यस्माभिर्वह्निप्रवेशः कार्यः, यदि स्वामिपादानां किंचिदनिष्टं भविष्यति। उक्तं च—

यस्मिन्कुले यः पुरुषः प्रधानः
स सर्वयत्नैः परिरक्षणीयः।

---

१. पथ्यं हितकरं भोजनं अश्नातीति। (आप को भी उचित भोजन करना है)।

तस्मिन्विनष्टे कुलमेव नष्टं
न नाभिभङ्गे ह्यरका वहन्ति[१] ॥१८७॥

तदाकर्ण्य मदोत्कट आह--'यद्येवं तत्कुरुध्व यद्रोचते।' तच्छ्रुत्वा स सत्वरं गत्वा तानाह-'भोः, स्वामिनो महत्यवस्था[२] वर्तते। तत्किं पर्यटितेन। तेन विना कोऽत्रास्मान् रक्षिष्यति। तद्गत्वा तस्य क्षुद्रोगात्परलोकं प्रस्थितस्यात्मशरीरदानं कुर्मः, येन स्वामिप्रसादस्यानृणतां गच्छामः। उक्तं च--

आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य पश्यतः।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत् ॥ १८८ ॥

तदनन्तरं ते सर्वे बाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान्दृष्ट्वा मदोत्कट आह—'भोः, प्राप्तं दृष्टं वा किंचित्सत्त्वम्।' अथ तेषां मध्यात्काकः प्रोवाच--स्वामिन्, वयं तावत्सर्वत्र पर्यटिताः। परं न किंचित्सत्त्वमासादितं दृष्टं वा। तदद्य मां भक्षयित्वा प्राणान्धारयतु स्वामी, येन देवस्याश्वासनं भवति मम पुनः स्वर्गप्राप्तिरिति। उक्तं च-

'स्वाम्यर्थे यस्त्यजेत्प्राणान्भृत्यो भक्तिसमन्वितः।
पदं स परमाप्नोति जरामरणवर्जितम्' ॥ १८९ ॥

तच्छ्रुत्वा शृगाल आह--'भोः, स्वल्पकायो भवान्। तव भक्षणात् स्वामिनस्तावत्प्राणयात्रा न भवति। अपरो दोषश्च तावत्समुत्पद्यते। उक्तं च--

१. नाभ्याः रथचक्रमध्यस्थ पिण्डिकायाः भङ्गे विनाशे सति अरकाः-रथाङ्गदण्डाः। अरा एव अरकाः। स्वार्थे कन्। यद्वा अल्पा अराः अरका—इति अल्पार्थे कन्। न वहन्ति रथं इति शेषः। तथैव नाभिभूते प्रधानपुरुषे विनष्टे अराइव शेषाः कुटुम्बिनः रथभूतं कुलं वोढुं, न पारयन्ति इति भावः॥

२. महती—अतिविपन्ना।

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्बलम् ।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते ॥ १९० ॥

तद्दर्शिता स्वामिभक्तिर्भवता । गतं चानृण्यं भर्तृपिण्डस्य[1] । प्राप्तश्चोभयलोके साधुवादः । तदपसराग्रतः । अहं स्वामिनं विज्ञापयामि । तथानुष्ठिते शृगालः सादरं प्रणम्योपविष्टः--'स्वामिन्, मां भक्षयित्वाऽद्य प्राणयात्रां विधाय ममोभयलोकप्राप्तिं कुरु । अथ तच्छ्रुत्वा द्वीप्याह--'भोः, साधूक्तं भवता । पुनर्भवानपि स्वल्पकायः स्वजातिश्च । नखायुधत्वादभक्ष्य एव[2] । उक्तं च--

नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि ।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम् ॥ १९१ ॥

तद्दर्शितं त्वयात्मनः कौलीन्यम् । तदपसराग्रतः, येनाहं स्वामिनं विज्ञापयामि ।' तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह— 'स्वामिन्, क्रियतामद्य मम प्राणैः प्राणयात्रा । दीयतामक्षयो वासः स्वर्गे । मम विस्तार्यतां क्षितितले प्रभूततरं यशः । तन्नात्र विकल्पः कार्यः । उक्तं च–

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् ।
भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले' ॥ १९२ ॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास--'एतैस्तावत्सर्वैरपि शोभनानि वाक्यानि प्रोक्तानि । न चैकोऽपि स्वामिना विनाशितः तदहमपि प्राप्तकालं विज्ञापयामि, येन मम वचनमेते त्रयोऽपि समर्थयन्ति ।' इति निश्चित्य प्रोवाच – 'भोः, सत्यमुक्तं भवता । परं भवानपि

---

१. भर्तृपिण्डस्य—राजान्नस्य आनृण्यं गतं—ऋणमोक्षः संजातः । स्वामी के अन्न का ऋण चुक गया ।

२. नख आयुधमिव यस्य स नखायुधः नखोपजीवी हिंस्रपशुः । स च शास्त्रेषु अभक्ष्यः स्मृतः ।

नखायुधः! तत्कथं भवन्तं स्वामी भक्षयति। तदपसराग्रतः,येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच--'स्वामिन्, एते तावदभक्ष्या भवताम्। तन्मम प्राणैः प्राणयात्रा विधीयताम्, येन ममोभयलोकप्राप्तिर्भवति। उक्तं च—

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः'॥१९३॥

एवमभिहिते ताभ्यां शृगालचित्रकाभ्यां विदारितोभयकुक्षिः क्रथनकः प्राणानत्याक्षीत्। ततश्च तैः क्षुद्रपण्डितैः सर्वैर्भक्षितः। अतोऽहं ब्रवीमि--'बहवः पण्डिताः क्षुद्रा' इति॥

तद्भद्र, क्षुद्रपरिवारोऽयं ते राजा मया सम्यग्ज्ञातः सतामसेव्यश्च। उक्तं च--

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
यथा गृध्रसमासन्नः कलहंसः समाचरेत्[१]॥१९४॥

तन्नूनं ममोपरि केनचिद्दुर्जनेनायं प्रकोपितः, तेनैवं वदति। अथवा भवत्येतत्! उक्तं च--

मृदुना सलिलेन खन्यमाना-
न्यवघृष्यन्ति गिरेरपि स्थलानि।
उपजापविदां च कर्णजापैः
किमु चेतांसि मृदूनि मानवानाम्॥१९५॥

अथवा साध्विदमुच्यते--

---

१. अशुद्धाः मलिनान्तःकरणाः प्रकृतयः अमात्यादयः परिजना यस्य तस्मिन् नीच सचिवादिपरिवृते इत्यर्थः। गृध्राः समासन्नाः समीपवर्तिनो यस्य तादृशो कलहंसो हि गृध्रवदेव समाचरति संगवशात्। एवं नीचपरिवृतो राजा स्वयं साधुरपि न प्रजारञ्जक इत्याशयः।

पदाहतोऽपि दृढदण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोऽप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥१९६॥

तथा च--

अहो खलभुजङ्गस्य विपरीतो वधक्रमः ।
कर्णे लगति चैकस्य प्राणैरन्यो वियुज्यते ॥१९७॥

तदेवं गतेऽपि किं कर्तव्यमित्यहं त्वा सुहृद्भावात्पृच्छामि ।' दमनक आह--'तद्देशान्तरगमनं युज्यते । नैवंविधस्य कुस्वामिनः सेवां विधातुम् । उक्तं च--

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते' ॥१९८॥

संजीवक आह--'अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते, न चान्यत्र गतानामपि निर्वृतिर्भवति । उक्तं च—

महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हिंसति हिंसकम् ॥१९९॥

तद्युद्धं मुक्त्वा मे नान्यदस्ति श्रेयस्करम् । उक्तं च--

मृतैः संप्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा ।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥२००॥

ललाटदेशे रुधिरं स्रवत्तु
शूरस्य यस्य प्रविशेच्च वक्त्रे ।
तत्सोमपानेन समं भवेच्च
संग्रामयज्ञे विधिवत्प्रदिष्टम् ॥२०१॥

तदाकर्ण्य दमनकश्चिन्तयामास—'युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा। तद्यदि कदाचित्तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्महाननर्थः संपत्स्यते। तदेनं भूयोऽपि स्वबुद्ध्या प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोमि।' आह च—'भो मित्र, सम्यगभिहितं भवता। परं कः स्वामिभृत्ययोः संग्रामः। उक्तं च—

शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा' ॥२०२॥

संजीवक आह—'कथमेतत्।' सोऽब्रवीत्—

## ९. टिट्टिभसमुद्र कथा।

कस्मिंश्चित्समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काल ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त। अथासन्नप्रसवा सती सा टिट्टिभमूचे—'भो कान्त, मम प्रसवसमयो वर्तते। तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानम्, येन तत्राहमण्डकविमोक्षणं करोमि।' टिट्टिभः प्राह—'भद्रे, रम्योऽयं समुद्रप्रदेशः। तदत्रैव प्रसवः कार्यः।' साऽऽह—'अत्र पूर्णिमादिनो समुद्रवेला चरति[१]। सा मत्तगजेन्द्रानपि समाकर्षति। तद्दूरमन्यत्र किंचित्स्थानमन्विष्यताम्।' तच्छ्रुत्वा विहस्य टिट्टिभः प्राह—'भद्रे, युक्तमुक्तं भवत्या। का मात्रा[२] समुद्रस्य या मम दूषयिष्यति प्रसूतिम्। किं न श्रुतं भवत्या—

---

१. समुद्रस्य वेला तटं तद्वर्तिजलमित्यर्थः चरति प्रसरति। (समुद्र में ज्वार आता है)।

२. मात्रा—सामर्थ्यम् (मजाल)।

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः ।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ॥२०३॥

तस्माद्विश्रब्धात्रैव गर्भं रक्ष ।

यः पराभवसंत्रस्तः स्वस्थानं संत्यजेन्नरः ।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते' ॥२०४॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास—'अहो गर्वः पक्षिकीटस्यास्य । अथवा साध्विदमुच्यते—

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचितकल्पितो गर्वः कस्य नात्रापि विद्यते ॥२०५॥

तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोऽण्डापहारे कृते करिष्यति ।' इति चिन्तयित्वा स्थितः । अथ प्रसवानन्तरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रो वेलाव्याजेनाण्डान्यपजहार । अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे—'भो मूर्ख, कथितमासीन्मया ते यत्समुद्रवेलयाऽण्डानां विनाशो भविष्यति । तद्दूरतरं व्रजावः । परं मूढतयाऽहंकारमाश्रित्य मम वचनं न करोषि । अथवा साध्विदमुच्यते

सुहृदां हितकामानां न करोतीह यो वचः ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति' ॥२०६॥

टिट्टिभ आह—'कथमेतत् ।' सोऽब्रवीत्—

## १०. काष्ठभ्रष्टकच्छप कथा ।

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः । तस्य च संकटविकटनाम्नी मित्रे हंसजातीये परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वाऽस्तमय-

वेलायां स्वनीडसंश्रयं कुरुतः । अथ गच्छता कालेनानावृष्टिवशात् सरः शनैः शनैः शोषमगमत् । ततस्तद्दुःखदुःखितौ तावूचतुः--'भो मित्र, जम्बालशेषमेतत्सरः संजातम् । तत्कथं भवान् भविष्यतीति व्याकुलत्वं नो हृदि वर्तते ।' तच्छ्रुत्वा कम्बुग्रीव आह--'भोः सांप्रतं नास्त्यस्माकं जीवितव्यं जलाभावात् । तथाऽप्युपायश्चिन्त्यतामिति । उक्तं च—

मित्रार्थे बान्धवार्थे च बुद्धिमान्यतते सदा ।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥२०७॥

तदानीयतां काचिद् दृढरज्जुर्लघु काष्ठं वा । अन्विष्यतां च प्रभूतजलसनाथं सरः; येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोस्तत्काष्ठं मया सहितं संगृह्य तत्सरो नयथः ।' तावूचतुः--'भो मित्र, एवं करिष्यावः । परं भवता मौनव्रतेन स्थातव्यम् । नो चेत्तव काष्ठात्पातो भविष्यति ।'

तथानुष्ठिते गच्छता कम्बुग्रीवेणाधोभागव्यवस्थितं किंचित्पुरामालोकितम् । तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः--'अहो, चक्राकारं किमपि पक्षिभ्यां नीयते । पश्यत पश्यत ।' अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह--'भोः, किमेष कोलाहलः' इति वक्तुमना अर्धोक्ते पतितः पौरैः खण्डशः कृतश्च । अतोऽहं ब्रवीमि – 'सुहृदां हितकामानाम्' इति । तथा च

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।[१]
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति' ॥ २०८ ॥

---

१. अनागतं विदधाति प्रतिकरोति इति अनागत विधाता दूरदर्शी इत्यर्थः । प्रत्युत्पन्ना सद्य उत्पन्ना मतिर्बुद्धिर्यस्य स । यद् भविष्यति तद् भविष्यति इति वादी यद्भविष्यः ।

टिट्टिभ आह---'कथमेतत्'। साऽब्रवीत्--

## ११. अनागतविधात्रादिमत्स्यत्रय कथा ।

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति । अथ कदाचित्तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तम् 'यदहो, बहुमत्स्योऽयं ह्रदः कदाचिदपि नास्माभिरन्वेषितः । तदद्य तावदाहारवृत्तिः संजाता । संध्यासमयश्च संवृत्तः । ततः प्रभातेऽत्रागन्तव्यमिति निश्चयः। अतस्तेषां तत्कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान्मत्स्यानाहूयेदमूचे—'अहो, श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम् । तद्रात्रावपि गम्यतां किंचिन्निकटं सरः।

अशक्तैर्बलिनः शत्रोः[१] कर्तव्यं प्रपलायनम् ।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥ २०९ ॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति । एतन्मम मनसि वर्तते । तन्न युक्तं सांप्रतं क्षणमप्यत्रावस्थातुम् । उक्तं च—

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा ।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम् ॥ २१० ॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह--'अहो, सत्यमभिहितं भवता । ममाप्यभीष्टमेतत् । तदन्यत्र गम्यतामिति । उक्तं च---

परदेशभयाद्भीता बहुमाया[२] नपुंसकाः ।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥ २११ ॥

---

१. बलिनः शत्रोः 'सकाशात्' इति शेषः ।

२. बह्वी माया येषां ते कपटपरा इत्यर्थः ।

यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशम् ।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति' ॥२१२।

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच—'अहो, न भवद्भ्यां मन्त्रितं सम्यगेतदिति, यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते । यद्यायुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव ।

तदहं न यास्यामि । भवद्भ्यां च यत्प्रतिभाति तत्कर्तव्यम् ।' अथ तस्य तं निश्चयं ज्ञात्वाऽनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन । अथ प्रभाते तैर्मत्स्यजीविभि र्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत्सरो निर्मत्स्यतां नीतम् । अतोऽहं ब्रवीमि—'अनागतविधाता च' इति ।

तच्छ्रुत्वा टिट्टिभ आह—'भद्रे, किं मां यद्भविष्यसदृशं संभावयसि । तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं स्वचञ्चुना शोषयामि ।' टिट्टिभ्याह—'अहो, कस्ते समुद्रेण सह विग्रहः । तन्न युक्तमस्योपरि कोपं कर्तुम् । उक्तं च—

पुंसामसमर्थनामुद्रवायात्मको भवेत्कोपः ।
पिठरं[1] ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम्[2] ॥२१३॥

तथा च ।

---

१. पिठरं--स्थाली ( बटलोही ) ।

२. दहतितराम्-द्विवचन विभज्योपपदे इति तरप् । किमेत्तिङव्ययेति आमुः । अतिशयेन दहनीत्यर्थः ॥

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत्' ॥२१४॥

टिट्टिभ आह--'प्रिय, मा मैवं वद । येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरून्विक्रमन्ते । उक्तं च—

प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥२१५॥

तथा च—

बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥२१६॥
हस्ती स्थूलतरः स चांकुशवशः किं हस्तिमात्रोऽङ्कुशः
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरि-
स्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः ॥२१७॥

तदनया चञ्च्वाऽस्य सकलं तोयं शुष्कस्थलतां नयामि ।' टिट्टिभ्याह—'भोः कान्त, यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति, तथा सिन्धुश्च, तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं विप्रुषवाहिन्या[१] चञ्च्वा शोषयिष्यसि । तत्किमश्रद्धेयेनोक्तेन ।' टिट्टिभ आह—'प्रिये,

अनिर्वेदः[२] श्रियो मूलं चञ्चूर्मे लोहसन्निभा ।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥२१८॥

---

१. विप्रुषवाहिनी—जलबिन्दुमात्रवहनसमर्था ।
२. अनिर्वेदः-अकातरत्वम् ।

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम् ।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि'[३] ॥२१९॥

टिट्टिभ्याह—'यदि त्वयाऽवश्य समुद्रेण सह विग्रहानुष्ठान कार्यम्, तदन्यानपि विहङ्गमानाहूय सुहृज्जनसहित एवं समाचर । उक्त च—

बहूनामप्यसाराणां समवायो[४] हि दुर्जयः ।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बद्ध्यते ॥२२०॥

तथा च ।

चटका काष्ठकूटेन मक्षिका दर्दुरैस्तथा ।
महाजनविरोधेन कुञ्जरः प्रलयं गतः' ॥२२१॥

टिट्टिभ आह— 'कथमेतत् ।' सा प्राह—

## १२. चटकदम्पति कुञ्जर कथा ।

कस्मिंश्चिद्वनोद्देशे चटकदम्पती तमालतरुकृतनिलयौ प्रतिवसतः स्म । अथ तयोर्गच्छता कालेन संततिरभवत् । अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित्तं तमालवृक्षं घर्मार्तश्छायार्थी समाश्रितः । ततो मदोत्कर्षात्तां तस्य शाखां चटकाश्रिता पुष्कराग्रेणाकृष्य बभञ्ज । तस्या भङ्गेन चटकाण्डानि सर्वाणि विशीर्णानि । आयुःशेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ । अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान्कुर्वाणा न किंचित्सुखमाससाद । अत्रान्तरे तस्यास्तान्प्रलापाञ्श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽभ्येत्य तामुवाच—'भगवति, किं वृथा प्रलापेन । उक्तं च—

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः ।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥२२२॥

---

३. परभागः—उत्कर्षः । कार्तिकमासे वर्तमान तुलानामधेयः राशिविशेषः ।
४. समवायः—समूहः ।

तथा च ।

अशोच्यानीह भूतानि, यो मूढस्तानि शोचति ।
स दुःखे लभते दुःखं[1] द्वावनर्थौ निषेवते ॥ २२३ ॥

चटका प्राह--'अस्त्वेतत् । परं दुष्टगजेन मदान्मम संतानक्षयः कृतः । तद्यदि मम त्वं सुहृत्सत्यस्तदस्य गजापसदस्य कोऽपिवधोपायश्चिन्त्यताम् , यस्यानुष्ठानेन मे संततिनाशदुःखमपसरति । उक्तं च—

आपदि येनापकृत येन च हसित दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जात नर मन्ये' ॥२२४॥

काष्ठकूट आह—'भगवति, सत्यमभिहित भवत्या । उक्तं च--

स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् ।
स भृत्यो यो विधेयज्ञः[2] सा भार्या यत्र निर्वृतिः ॥२२५॥

तत्पश्य मे बुद्धिप्रभावम् । परं ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तत्तामाहूयागच्छामि, येन स दुरात्मा दुष्टगजो वध्यते । अथासौ चटकया सह मक्षिकामासाद्य प्रोवाच--'भद्रे, ममेष्टेयं चटका केनचिद्दुष्टगजेन पराभूताऽण्डस्फोटनेन । तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह—सत्यमेतत् । परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति । तमप्याहूय यथोचितं कुर्मः ।

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः । अथ स प्रोवाच--'कियन्मात्रोऽसौ[3] वराको गजो महाजनस्य

१. स एकस्मिन् दुःखे अन्यद् दुःखं लभते ।
२. विधेयज्ञः—कर्तव्यकुशलः ।
३. कियन्मात्रः—कियत्प्रमाणः । ( क्या चीज है )

कुपितस्याग्रे । तन्मदीयो मन्त्रः कर्तव्यः । मक्षिके, त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु, येन श्रवणसुखलालसो निमीलितनयनो भवति । ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनोऽन्धीभूतस्तृषार्तो मम गर्ततटाश्रितस्य सपरिकरस्य[1] शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति । ततो गर्तमासाद्य पतिष्यति पञ्चत्वं यास्यति चेति । एवं समवायः[2] कर्तव्यो यथा वैरसाधनं भवति ।'

अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान्निमीलितनेत्रः काष्ठकूटहृतचक्षुर्मध्याह्नसमये भ्राम्यन् मण्डूकशब्दानुसारी गच्छन् महतीं गर्तामासाद्य पतितो मृतश्च । अतोऽहं ब्रवीमि—'चटका काष्ठकूटेन' इति ।

टिट्टिभ आह—'भद्रे, एवं भवतु । सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामि । इति निश्चित्य बकसारसमयूरादीन्समाहूय प्रोवाच—'भोः, पराभूतोऽहं समुद्रेणाण्डकापहारेण । तच्चिन्त्यतामस्य शोषणोपायः ।' । ते संमन्त्र्य प्रोचुः—'अशक्ता वयं समुद्रशोषणे । तत्किं वृथाप्रयासेन । उक्तं च—

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः ।
युद्धार्थं, स निवर्तेत शीर्णदन्तो गजो यथा ॥२२६॥

तदस्माकं स्वामी वैनतेयोऽस्ति । तत्तस्मै सर्वमेतत्परिभवस्थानं[3] निवेद्यताम्, येन स्वजातिपरिभवकुपितो वैरानृण्यं[4] गच्छति । अथवात्रावलेपं[5] करिष्यति तथाऽपि नास्ति वो दुःखम् । उक्तं च—

---

१. सपरिकरस्य—सपरिजनस्य ।
२. समवायः—संघः । ३ परिभव स्थानं—अपमान प्रसंगः ।
४. वैरस्य आनृण्यं ऋणमुक्तिं गच्छति, वैरपरिशोधं करोतीत्यर्थः ।
५. अवलेपः—गर्वः । गर्वमासाद्य अस्माकं साहाय्यं न करिष्यति इत्यर्थः ।

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति ॥२२७॥

तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी ।' तथाऽनुष्ठिते सर्वे ते पक्षिणो विषण्णवदना बाष्पपूरितदृशो वैनतेयसकाशमासाद्य करुणस्वरेण फूत्कर्तुमारब्धाः 'अहो, अब्रह्मण्यमब्रह्मण्यम् । अधुना सदाचारस्य टिट्टिभस्य भवति नाथे सति समुद्रेणाण्डान्यपहृतानि । तत्प्रनष्टमधुना पक्षिकुलम् । अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते । उक्तं च –

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् ।
गतानुगतिको लोको न लोकः पारमार्थिकः[1] ॥ २२८ ॥

तथा च ।

प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः ।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥ २२९ ॥
प्रजापीडनसंतापात्समुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ २३० ॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ २३१ ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्– 'अहो, सत्यमुक्तमेतैः पक्षिभिः । तदद्य गत्वा तं समुद्रं शोषयामः ।' एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह– 'भो गरुत्मन्, भगवता नारायणेनाहं तव पार्श्वे प्रेषितः । देवकार्याय भगवानमरावत्यां यास्यतीति । तत्सत्वरमागम्यताम् ।' तच्छ्रुत्वा गरुडः साभिमानं प्राह–

---

१. गतं अनुगच्छतीति गतानुगतिकः अविमृश्यानुगामी वर्तते, न तु पारमार्थिकः तत्वविवेकशीलः ।

'भो दूत, किं मया कुभृत्येन भगवान्करिष्यति। तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम्। मदीयो नमस्कारो वाच्यो भगवतः। उक्तं च--

योन वेत्ति गुणान् यस्य न तं सेवेत पण्डितः।
न हि तस्मात्फलं किंचित् सुकृष्टादूषरादिव' ॥ २३२ ॥

दूत आह—'भो वैनतेय, कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक्। तत्कथय किं ते भगवताऽपमानस्थानं[1] कृतम्।' गरुड आह—'भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि। तद्यदि तस्य निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः। तद्द्रुततरं गत्वा भवता भगवतः समीपे वक्तव्यम्।' अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवांश्चिन्तयामास--'अहो, स्थाने कोपो वैनतेयस्य। तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि। उक्तं च--

भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत्।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रियमात्मनः ॥ २३३ ॥

अन्यच्च।

राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति।
ते तु संमानितास्तस्य प्राणैरप्युपकुर्वते' ॥ २३४ ॥

इत्येवं संप्रधार्य रुक्मपुरे वैनतेयसकाशं सत्वरमगमत्। वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुखः प्रणम्योवाच--- 'भगवन्, त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य ममापमाननं विहि-

---

१. अपमानस्य स्थानं विषयः तिरस्कारकारणमित्यर्थः। (किस बात में तेरा अपमान कर दिया)।

तम् । परं भगवल्लज्जया मया विलम्बितम्, नो चेदेनमहं स्थलत्वमद्यैव नयामि । यतः स्वामिभयाच्छुनोऽपि प्रहारो न दीयते । उक्तं च—

येन स्याल्लघुता चाऽथ पीडा चित्ते प्रभोः क्वचित् ।
प्राणत्यागेऽपि तत्कर्म न कुर्यात्कुलसेवकः' ॥ २३५ ॥

तच्छ्रुत्वा भगवानाह—'भो वैनतेय, सत्यमभिहितं भवता । तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं संभावयावः[1] । अमरावतीं च गच्छावः ।' तथाऽनुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं संधायाभिहितः—'भो दुरात्मन्, दीयन्तां टिट्टिभाण्डानि । नो चेत्स्थलतां त्वां नयामि ।' ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि । टिट्टिभेनापि भार्यायै समर्पितानि । अतोऽहं ब्रवीमि—'शत्रोर्बलमविज्ञाय' इति ॥ तस्मात्पुरुषेणोद्यमो न त्याज्यः । तदाकर्ण्य संजीवकस्तमेव भूयोऽपि पप्रच्छ—'भो मित्र, कथं ज्ञेयो मयाऽसौ दुष्टबुद्धिरिति । इयन्तं कालं यावदुत्तरोत्तरस्नेहेन[2] प्रसादेन चाहं दृष्टः । न कदाचित्तद्विकृतिर्दृष्टा तत्कथ्यतां येनाहमात्मरक्षार्थं तद्वधायोद्यमं करोमि ।' दमनक आह—'भद्र, किमत्र ज्ञेयम् । एष ते प्रत्ययः । यदि रक्तनेत्रस्त्रिशिखां[3] भ्रुकुटिं दधानः सृक्किणी परिलेलिहत् त्वां दृष्ट्वा भवति, तद्दुष्टबुद्धिः । अन्यथा सुप्रसादश्चेति । तदाज्ञापय माम् । स्वाश्रयं प्रति गच्छामि । त्वया च यथाऽयं मन्त्रभेदो न भवति तथा कार्यम् । यदि निशामुखं प्राप्य गन्तुं शक्नोषि तद्देशत्यागः कार्यः । यतः—

१. संभावयावः—सान्त्वयावः ।
२. उत्तरोत्तरस्नेहेन—क्रमशः वर्धमानेन प्रेम्णा इति भावः । ३. तिस्रः शिखा यस्याः ताम् । वलित्रयकुटिलामित्यर्थः ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥३३६॥

आपदर्थे धनं रक्षेद् दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥३३७॥

बलवताभिभूतस्य विदेशगमनं तदनुप्रवेशो वा नीतिः । तद्देशत्यागः कार्यः । अथवाऽऽत्मा सामादिभिरुपायैरभिरक्षणीयः । उक्तं च —

येन केनाप्युपायेन शुभेनाप्यशुभेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥३३८॥

यो मायां[1] कुरुते मूढः प्राणत्यागे धनादिषु ।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥३३९॥

एवमभिधाय दमनकः करटकसकाशमगमत् । करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच—'भद्र, किं कृतं तत्र भवता ।' दमनक आह —'मया तावन्नीतिबीजनिर्वापणं[2] कृतम्, परतो दैवविहितायत्तम्[3] । उक्तं च यतः—

पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता ।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥३४०॥

तथा च ।

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥३४२॥

---

१. माया--ममत्वम् । २. निर्वापणं--आरोपणम् । ३. दैवविहिते--दैवविधाने आयत्तमाधीनम् । अत्र भावे क्तप्रत्ययः ।

करटक आह—'तत्कथय कीदृक्त्वया नीतिबीजं निर्वापितम् ।' सोऽब्रवीत्—'मयाऽन्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदस्तथा विहितो यथा भूयोऽपि मन्त्रयन्तावेकस्थानस्थितौ न द्रक्ष्यसि ।' करटक आह—'अहो, न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ । उक्तं च—

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत् ।
जन्मजन्मान्तरं दुःखी स नरः स्यादसंशयम् ॥३४३॥

अपरं त्वं यद्भेदमात्रेणापि तुष्टस्तदप्ययुक्तम्, यतः सर्वोऽपि जनो विरूपकरणे समर्थो भवति नोपकर्तुम् । उक्तं च—

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं न चोन्नमितुम्' ॥३४४॥

दमनक आह—'अनभिज्ञो भवान्नीतिशास्त्रस्य । तेनैतद्ब्रवीषि । उक्तं च यतः—

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत् ।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥३४५॥

तच्छत्रुभूतो[१]ऽयमस्माकं मन्त्रिपदापहरणात् । उक्तं च—

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते ।
स तस्य सहजः शत्रुरुच्छेद्योऽपि[२] प्रिये स्थितः॥३४६॥

तन्मया स उदासीनतया समानीतोऽभयप्रदानेन यावत्तावदहमपि तेन साचिव्यात्प्रच्यावितः । अथवा साध्विदमुच्यते—

---

१. शत्रुभूतः—रिपुतुल्यः ।
२. प्रिये स्थितः अपि इत्यन्वयः । अत्र इव शब्दो भिन्नक्रमः । जिगीषते—जेतुमिच्छति इति इच्छार्थे सन् । अत्रात्मनेपदं चिन्त्यम् ।

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।[१]
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
गौरांगोऽभूद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥३४७॥

तेन मया तस्योपरि वधोपाय एव विरच्यते । देशत्यागाय वा भविष्यति । तच्च त्वां मुक्त्वाऽन्यो न ज्ञास्यति । तद्युक्तमेतत्स्वार्थायानुष्ठितम् । उक्तं च यतः--

निस्त्रिंशं हृदयं कृत्वा वाणीं चेक्षुरसोपमाम् ।
विकल्पोऽत्र[२] न कर्तव्यो हन्यादेवापकारिणम् ॥३४८॥

अपरं मृतोऽप्यस्माकं भोज्यो भविष्यति । तदेकं तावद्वैरसाधनम्, अपरं साचिव्यं च भविष्यति तृप्तिश्च' इति । तद्गुणत्रयेऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं जाड्यभावात् । उक्तं च--

परस्य पीडनं कुर्वन्स्वार्थसिद्धिं च पण्डितः ।
गूढबुद्धिर्न[३] लक्ष्येत वने चतुरको यथा' ॥३४९॥

करटक आह--'कथमेतत् ।' स आह--

## १२. सिंहशृगाल कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः । अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया

१. प्रभवति समर्थो भवति । वाञ्छमानः --तत्पदं वाञ्छन् । वाक्यतः-श्रुतिपरम्परातः । गौरांगः-हरिवर्षं वास्तव्याः जनविशेषा इत्यर्थः सित्र जात्याख्यायामेकस्मिन्निति १।२।५८ इति जातावेकवचनम् । २. विकल्पसन्देहः ( ननु नच । ३. गूढा बुद्धि र्यस्य स । कपट नोतिचतुर इत्यर्थः ।

स्वयूथाद्भ्रष्टोष्ट्रचु प्रविष्टा कस्मिंश्चिद्वनगहने समासादिता । अथ तां व्यापाद्य यावदुदरं स्फोटयति तावज्जीवल्लघुदासेरकशिशुः निष्क्रान्तः । सिंहोऽपि दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः । परं स्नेहाद्बालदासेरकं त्यक्त्वा गृहमानीयेदमुवाच–'भद्र, न तेऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि । ततः स्वेच्छयाऽत्र वने भ्राम्यताम्' इति । यतस्ते शङ्कुसदृशौ[1] कर्णौ, ततः ते शङ्कुकर्ण नाम इति भविष्यति ।'

एवमनुष्ठिते चत्वारोऽपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति । शङ्कुकर्णोऽपि यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति । अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन मत्तगजेन सह युद्धमभवत् । तेन मदवीर्यात्[2] स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति । तदा क्षुत्क्षामकण्ठस्तान्प्रोवाच—'भोः' अन्विष्यतां किंचित्सत्त्वं येनाहमेवंस्थितोऽपि तं व्यापाद्यात्मनो युष्माकं च क्षुत्प्रणाशं करोमि ।'

तच्छ्रुत्वा ते त्रयोऽपि वने संध्याकालं यावद्भ्रान्ताः, परं न किंचित्सत्त्वमासादितम् । अथ चतुरकश्चिन्तयामास—'यदि शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति । परं नैनं स्वामी मित्रत्वादाश्रयसमाश्रितत्वाच्च विनाशयिष्यति । अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य यथा करिष्ये तथा व्यापादयिष्यति ।

एवं विचिन्त्य शङ्कुकर्णमिदमाह—'भोः शङ्कुकर्ण, स्वामी तावत्पथ्यं विना क्षुधया परिपीड्यते । स्वाम्यभावादस्माकमपि ध्रुव विनाश एव । ततो स्वाम्यर्थे किंचिद्वाक्यं वदिष्यामि । तच्छ्रूय-

१. शंकुः कीलकम् ।
२. मदवीर्यात् मदातिरेकात् ।

ताम् ।' शङ्कुकर्ण आह--'भोः, शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं १ करोमि । अपरं स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति' । अथ चतुरक आह--'भो भद्र, आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति ।' तदाकर्ण्य शङ्कुकर्णः प्राह--'भद्र, यद्येवं तन्मदीयप्रयोजनमेतदुच्यताम् । स्वाम्यर्थः क्रियतामिति । परमत्र धर्मः प्रतिभूः २ ।' इति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः ।

ततश्चतुरक आह--'देव, न किंचित्सत्त्वं प्राप्तम् । भगवानादित्योऽप्यस्तं गतः । तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति, ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा ३।' सिंह आह--'भोः, यद्येवं तत्सुन्दरम् । व्यवहारस्यास्य ४ धर्मः प्रतिभूः क्रियताम्' इति । अथ सिंहवचनानन्तरं वृकश्रृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः ।

अथ वज्रदंष्ट्रश्चतुरकमाह--'भोश्चतुरक, यावदहं नदीं गत्वा स्नानं देवतार्चनविधिं च कृत्वाऽऽगच्छामि, तावत्त्वयात्राप्रमत्तेन भाव्यम्' इत्युक्त्वा नद्यां गतः । अथ तस्मिन्गते चतुरकश्चिन्तयामास--'कथं ममैकाकिनो भोज्योऽयमुष्ट्रो भविष्यति' इति विचिन्त्य क्रव्यमुखमाह--'भोः क्रव्यमुख, क्षुधालुर्भवान् । तद्यावदसौ स्वामी नागच्छति, तावत्त्वमस्योष्ट्रस्य मांसं भक्षय । अहं त्वां स्वामिनो निर्दोषं

---

१. निर्विकल्पम्--निःसंशयम् ।

२. प्रतिभूः--मध्यस्थः साक्षी । ( जामिन । ३. धर्मः प्रतिभूः यस्याः तया इदं द्विगुणवृद्ध्या इति पदस्य विशेषणम् । ४ व्यवहारः (सौदा ) ।

प्रतिपादयिष्यामि ।' सोऽपि तच्छ्रुत्वा यावत्किंचिन्मांसमास्वादयति तावच्चतुरकेणोक्तम्—'भोः क्रव्यमुख, समागच्छति स्वामी। तत्त्यक्त्वैनं दूरे तिष्ठ, येनास्य भक्षणं न विकल्पयति[1]।

तथाऽनुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति तावद्रिक्तीकृतहृदयो दासेरकः। ततो भ्रुकुटिं कृत्वा परुषतरमाह—'अहो, केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि'। एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति। सिंह उवाच—'किल तद्वद किंचिद्येन मम शान्तिर्भवति।' अथ चतुरको विहस्योवाच 'भो, मामनादृत्य पिशितं भक्षयित्वाऽधुना मन्मुखमवलोकयसि। तदास्वादयास्य दुर्णयतरोः फलम्' इति। तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद् दूरदेशं गतः।

एतस्मिन्नन्तरे तेन मार्गेण दासेरकसार्थो भाराक्रान्तः समायातः। तस्याग्रेसरोष्ट्रस्य कण्ठे महती घण्टा बद्धा। तस्याः शब्दं दूरतोऽप्याकर्ण्य सिंहो जम्बुकमाह—'भद्र, ज्ञायतां किमेष रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किंचिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच—'स्वामिन्, गम्यतां गम्यतां यदि शक्नोषि गन्तुम्।' सो अब्रवीत्—'भद्र, किमेवं मां व्याकुलयसि, तत्कथय किमेतत्' इति। चतुरक आह—'स्वामिन्, एष धर्मराजस्तवोपरि कुपितः यदनेनाकाले दासेरकोऽयं मदीयो व्यापादितः तत्सहस्रगुणमुष्ट्रमस्य सकाशाद् गृहीष्यामि' इति निश्चित्य बृहदुष्ट्रमान[2]मादायाग्रेसरस्योष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा वध्यदासेरकसक्तान्[3] पितृपितामहानादाय वैरनिर्यातनार्थमायात एव।' सिंहोऽपि

१—विकल्पयति–संशेते। २—उष्ट्रपरिमाणं इत्यर्थः।
३—वध्यदासेरकसक्तान्—निहतकरभक सम्बन्धिनः।

तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रनष्टः। चतुरकोऽपि शनैः शनैस्तस्योष्ट्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि— 'परस्य पीडनं कुर्वन्' इति॥

अथ दमनके गते संजीवकश्चिन्तयामास—'अहो किमेतन्मया कृतम्, यच्छष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः। अथवा साध्विद मुच्यते—

अगम्यान्यः पुमान्याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ३५०॥

तत्किं करोमि। क्व गच्छामि। कथं मे शान्तिर्भविष्यति। अथवा तमेव पिङ्गलकं गच्छामि। कदाचिन्मां शरणागतं रक्षति। प्राणैर्न वियोजयति।

अपरं चान्यत्र गतस्यापि मे कस्यचिद् दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति, तद्वरं सिंहात्। उक्तं च—

महद्भिः स्पर्धमानस्य विपदेव गरीयसी।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे॥ ३५१॥

तथा च।

महतोऽपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति।
दानार्थी मधुपो यद्वद् गजकर्णसमाहतः'॥ ३५२॥

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः संवृतशरीरो[1] दूरतरं प्रणामकृतिं[2] विनाप्युपविष्टः। पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्द-

---

१—संवृतं संकुचितं शरीरं यस्य स, स्वगात्रं संकोच्य इत्यर्थः।

२—प्रणामस्य कृतिं व्यापारं, राजोचितं नमस्कारादिकं इत्यर्थः।

धानः कोपात्तस्योपरि पपात । अथ संजीवकः खरनखरविकर्तितपृष्ठः शृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मादपेतः शृङ्गाभ्यां हन्तुमिच्छन्युद्धायावस्थितः । अथ द्वावपि तौ पुष्पितपलाशप्रतिमौ परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह—'भो मूढमते, अनयोर्विरोधं वितन्वता त्वया साधु न कृतम् । न च त्वं नीतितत्त्वं वेत्सि ।

तद्यदि स्वाम्यभिघातो भविष्यति तत्किं त्वदीयमन्त्रबुद्ध्या क्रियते । अथ संजीवको न वध्यते तथाऽप्यभव्यम् । यतः प्राणसंदेहात्तस्य च वधः । तन्मूढ, कथं त्वं मन्त्रिपदमभिलषसि सामसिद्धिं न वेत्सि । तद्वृथा मनोरथोऽयं ते दण्डरुचेः[१] । उक्तं च—

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा ।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥ ३५३ ॥

तथा च ।

साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ ३५४ ॥

तथा च ।

आदौ साम प्रयोक्तव्यं पुरुषेण विजानता ।
सामसाध्यानि कार्याणि विक्रियां यान्ति न क्वचित् ॥ ३५५ ॥

तथा यत्त्वं मन्त्रित्वमभिलषसि, तदप्ययुक्तम् । यतस्त्वं मन्त्रिगतिं न वेत्सि । यतः पञ्चविधो मन्त्रः । स च (१) कर्मणामारम्भोपायः, (२) पुरुषद्रव्यसम्पत्, (३) देशकालविभागः, (४) विनिपातप्रतीकारः, (५)

१—दण्डोपायप्रियस्य, युद्धाभिलाषिण इत्यर्थः ।

कार्यसिद्धिश्चेति । १ सोऽयं स्वाम्यमात्ययोरेकतमस्य किं वा द्वयोरपि विनिपातः समुत्पद्यते लग्नः२ । तद्यदि काचिच्छक्तिरस्ति तद्विचिन्त्यतां विनिपातप्रतीकारः । भिन्नसंधाने हि मन्त्रिणां बुद्धिपरीक्षा । तन्मूर्ख, तत्कर्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि । उक्तं च--

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ३५६ ॥

अन्यच्च--

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ३५७ ॥

---

१—क. कर्मणामारम्भोपायः—स्वाभीप्सितकर्मणां आरम्भस्य क उपाय इति चिन्तनम् । अभीष्ट काय को किस प्रकार प्रारम्भ किया जाय यह सोचना ।

ख. पुरुषद्रव्य सम्पत्—पुरुषाणां द्रव्याणां च सम्पत् । अस्मै कर्मणे एतावन्तः पुरुषा द्रव्याणि च अपेक्ष्यन्ते इति विचारणा । इस काम में कितने आदमी तथा कितने धन की आवश्यकता होगी यह विचारना ।

ग. देशकाल विभागः—कस्मिन् देशे च काले च इदं कर्म अनुष्ठेयमिति विचारः । अभीष्ट कार्य के लिये उपयुक्त स्थान व समय का विचारना ।

घ. विनिपातप्रतीकारः—विनिपात. अपायः तस्य प्रतीकारः । उस कार्य में आने वाले विघ्नों का प्रतीकार करना ।

ङ. कार्यसिद्धिः—कदा कियती च सिद्धिः सम्भवा इति विमर्शः । कार्यसिद्धि के स्वरूप को ठीक २ समझना ।

२. सम्पद्यते लग्नः । शीघ्रं सम्पत्स्यते इत्यर्थः । शीघ्र होने वाला है ।

अथवा न ते दोषोऽयम् । स्वामिनो दोषः, यस्ते वाक्यं श्रद्दधाति । तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योऽपि कश्चिन्नास्य समीपे साधुजनः समेष्यति । उक्तं च—

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ २५८ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति ।
उक्तं च— तत्किं मूर्खोपदेशेन । केवलं दोषो न गुणः । उक्तं च—

नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया ।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ २५९ ॥

दमनक आह 'कथमेतत् ।' सोऽब्रवीत्—

## १४. सूचीमुखवानर कथा ।

अस्ति कस्मिंश्चित्पर्वतैकदेशे वानरयूथम् । तच्च कदाचिद् हेमन्तसमयेऽतिकठोरवातसंस्पर्शवेपमानकलेवरं प्रवर्षद्घनधारानिपातसमाहतं[1] न कथञ्चिच्छान्तिमगमत् । अथ केचिद्वानरा वह्निकणसदृशानि गुञ्जाफलान्यवचित्य वह्निवाञ्छया फुत्कुर्वन्तः समन्तात्तस्थुः । अथ सूचीमुखो[2] नाम पक्षी तेषां तं वृथाऽऽयासमवलोक्य प्रोवाच— 'भोः, सर्वे मूर्खा यूयम् । नैते वह्निकणाः, गुञ्जाफलानि । एतानि । तत्किं वृथा श्रमेण । नैतस्माच्छीतरक्षा भविष्यति तदन्विष्यतां

१—प्रवर्षन्तः प्रकृष्टं वर्षन्तः ये घनाः मेघाः तेषां धाराणां निपातेन पतनेन समाहतं ताडितं ।

२—सूचीमुखः—सूच्य मुखं इव मुखं यस्य सः । ( सूई के समान तेज चोंच वाला, बया पक्षी ) ।

कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा । अद्यापि साटोपा[१] मेघा दृश्यन्ते । अथ तेषामेकतमो वृद्धवानरस्तमुवाच--'भो मूर्ख, किं तवानेन व्यापारेण । तद्गम्यताम् ।

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह--'भोः, किं वृथा-क्लेशेन ।' अथ यावदसौ न कथंचित्प्रलपन्विरमति तावदेकेन वान-रेण व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च । अतोऽहं ब्रवीमि--'नानाम्यं नमते दारु' इत्यादि ॥ तथा च ।

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।
पयःपानं भुजङ्गानां केवलं विषवर्धनम् ॥ २६० ॥

अन्यच्च ।

उपदेशो न दातव्यो यादृशे तादृशे जने ।
पश्य वानरमूर्खेण सुगृही निगृहीकृतः' ॥ २६१ ॥

दमनक आह--'कथमेतत् ।' सोऽब्रवीत्--

## १५. वानरचटकदम्पति कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे शमीवृक्षः । तस्य लम्बमानशिखायां कृतावासावरण्यचटकदम्पती वसतः स्म । अथ कदाचित्तयोः सुख-संस्थयो[२] र्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः । अत्रान्तरे कश्चिच्छा-

---

१—साटोपाः—आटोपो विस्तारः तेन सहिताः, सर्वतः प्रवृद्धाः इत्यर्थः । यद्वा आटोपः गर्वः तत्संहिताः-प्रवृद्ध वीर्याः ( जोश से भरे ) ।

२—सुखा संस्था निवासः ययोः तयोः ।

खामृगो वातासारसमाहतः[1] प्रोद्धूषितशरीरो[2] दण्डवीणां[3] वादयन् वेपमानस्तच्छमीमूलमासाद्योपविष्टः । अथ तं तादृशमवलोक्य चटका प्राह—'भो भद्र,

हस्तपादसमोपेतो दृश्यसे पुरुषाकृतिः ।
शीतेन भिद्यसे मूढ कथं न कुरुषे गृहम्' ॥ २६२ ॥

एतच्छ्रुत्वा तां वानरः सकोपमाह—'अधमे, कस्मान्न त्वं मौनव्रता भवसि । अहो, धार्ष्ट्यमस्याः । अद्य मामुपहसति । तत्किं बहुना तावत् ।' कुलायस्थितया तयाभिहितः स तामारुत्तां शमीमारुह्य तस्याः कुलायं शतधा खण्डशोऽकरोत् । अतोऽहं ब्रवीमि—'उपदेशो न दातव्यः' इति ॥

तन्मूर्ख, शिक्षापितोऽपि न शिक्षितस्त्वम् । अथवा न ते दोषोऽस्ति, यतः साधोः शिक्षा गुणाय संपद्यते, नासाधोः । उक्तं च—

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम् ।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः ॥ २६३ ॥

तद्व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन्नात्मनः शान्तिमपि वेत्सि। उक्तं च--

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ २६४ ॥

अहो, साध्विदमुच्यते--

---

१—वातैः आसारैश्च धारासंपातैश्च आहतः ताडितः ।

२—प्रोद्धूषितं प्रकर्षेण कम्पमानं रोमाञ्चितं वा शरीरं यस्य स । ( सरदी के मारे अत्यधिक कांप रहा है या रोमाञ्चित हो गया है जिसका शरीर ) ।

३—दन्ता एव वीणा तां वादयन् ( दांत कटकटाता हुआ ।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम ।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः' ॥ २६५ ॥

दमनक आह—'कथमेतत्' । सोऽब्रवीत्—

## १६. धर्मबुद्धिपापबुद्धि कथा ।

कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म । अथ कदाचित्पापबुद्धिना चिन्तितम्—'अहं तावन्मूर्खो दारिद्र्योपेतश्च । तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वाऽस्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामि ।' अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह—'भो मित्र, वार्धकभावे किं त्वमात्मविचेष्टितं स्मरसि । देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्तां कथयिष्यसि । उक्तं च—

देशान्तरेषु बहुविधभाषावेशादि येन न ज्ञातम् ।
भ्रमता धरणीपीठे, तस्य फलं जन्मनो व्यर्थम् ॥ २६६ ॥

तथा च ।

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक् ।
यावद्व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ २६७ ॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः । तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम् । ततश्च द्वावपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ ।

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः—'भद्र, न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते । यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किंचिन्मात्रमादाय

गृहं प्रविशावः । भूयोऽपि प्रयोजने संजाते तन्मात्रं समेत्यास्मात्स्थानान्नेष्यावः । उक्तं च—

न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २६८ ॥

तदाकर्ण्य धर्मबुद्धिराह—'भद्र, एवं क्रियताम् ।' तथाऽनुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ । अथान्यस्मिन्नहनि पापबुद्धिर्निशीथेऽटव्यां गत्वा तत्सर्वं वित्तं समादाय गर्तं पूरयित्वा स्वभवनं जगाम ।

अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच—'सखे, बहुकुटुम्बा वयं वित्ताभावात्सीदामः । तद्गत्वा तत्र स्थाने किंचिन्मात्रं धनमानयावः ।' सोऽब्रवीत्—'भद्र, एवं क्रियताम्' । अथ द्वावपि गत्वा तत्स्थानं यावत्खनतस्तावद्रिक्तं भाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन्प्रोवाच—'भो धर्मबुद्धे, त्वया हृतमेतद्धनम्, नान्येन । यतो भूयोऽपि गर्तापूरणं कृतम् । तत्प्रयच्छ मे तस्यार्धम् । अथवाऽहं राजकुले निवेदयिष्यामि ।' स आह—'भो दुरात्मन्, मैवं वद । धर्मबुद्धिः खल्वहम् । नैतच्चौरकर्म करोमि । उक्तं च—

मातृवत्परदाराणि परद्रव्याणि लोष्टवत् ।
आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धयः' ॥ २६९ ॥

एवं द्वावपि तौ विवदमानौ धर्माधिकारिणं गतौ प्रोचतुश्च परस्परं दूषयन्तौ । अथ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं[1] यावन्नियोजितौ

---

[1]—धर्माधिकरणं-न्यायालयः ( अदालत )। दिव्यार्थे-अग्निस्पर्श-भुजङ्गग्रहण-तुलारोहणादि दिव्यशपथकरणाय ।

तावत्पापबुद्धिराह--'अहो, न सम्यग्दृष्टोऽयं न्यायः । उक्तं च--

विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥ २७० ॥

तदत्र विषये मम वृक्षदेवताः साक्षीभूतास्तिष्ठन्ति । ता अप्यावयोरेकतरं चौरं साधुं वा करिष्यन्ति ।' अथ तैः सर्वैरभिहितम्--'भोः युक्तमुक्तं भवता । तदस्माकमप्यत्र विषये महत्कौतूहलं वर्तते । प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यम्' इति । एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच--'तात, प्रभूतोऽयं मयाऽर्थो धर्मबुद्धेश्चोरितः । स च तव वचनेन परिणतिं गच्छति ।[१] अन्यथाऽस्माकं प्राणैः सह यास्यति' । स आह--'वत्स, द्रुतं वद येन प्रोच्य तद्द्रव्यं स्थिरतां नयामि ।' पापबुद्धिराह--'तात, अस्ति तत्प्रदेशे महाशमी । तस्यां महत्कोटरमस्ति । तत्र त्वं सांप्रतमेव प्रविश । ततः प्रभाते यदाऽहं सत्यश्रावणं करोमि[२] तदा त्वया वाच्यं यद्धर्मबुद्धिश्चौर इति ।' तथाऽनुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धर्मबुद्धिपुरःसरो धर्माधिकरणकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच--

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ २७१ ॥

भगवति वनदेवते, आवयोर्मध्ये यश्चौरस्तं कथय ।' अथ पापबुद्धि-

---

१—परिणतिं परिपाकं गच्छति ( पच जाये, अधिकार में आ जाये ) ।
२—सत्यासत्य निर्णय प्रार्थनां करोमि ( धर्म की दुहाई दूं ) ।

पिता शमीकोटरस्थः प्रोवाच—'भो, शृणुत शृणुत। धर्मबुद्धिना हृतमेतद्धनम्'। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्याऽवलोकयन्ति तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना संदीपितम्।

अथ ज्वलति तस्मिञ्शमीकोटरेऽर्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन्पापबुद्धिपिता निश्चक्राम। ततश्च तैः सर्वैः पृष्टः—'भोः किमिदम्।' इत्युक्ते स पापबुद्धिविचेष्टितं सर्वमिदं निवेदयित्वोपरतः। अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः—'अहो, साध्विदमुच्यते—

उपायं चिन्तयेत्प्राज्ञस्तथाऽपायं च चिन्तयेत्।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः' ॥ २७२ ॥

धर्मबुद्धिः प्राह—'कथमेतत्'। ते प्रोचुः—

## मूर्खबकनकुल कथा।

अस्ति कस्मिंश्चिद्वनोद्देशे बहुबकसनाथो वटपादपः। तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म। स च बकबालकानजातपक्षानपि सदैव भक्षयन्कालं नयति। अथैको बकस्तेन भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात्सरस्तीरमासाद्य बाष्पपूरपूरितनयनोऽधोमुखस्तिष्ठति। तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच—'माम, किमेवं रुद्यते भवताऽद्य।' स आह—'भद्र, किं करोमि। मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः। तद्दुःखदुःखितोऽहं रोदिमि। तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय।'

तदाकर्ण्य कुलीरकश्चिन्तयामास—'अयं तावदस्मज्जातिसहजवैरी । तथोपदेशं प्रयच्छामि सत्यानृतं, यथान्येऽपिऽपि बकाः सर्वे संक्षय-मायान्ति । उक्तं च—

नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयम् ।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा' ॥ २७३ ॥

आह च—'माम, यद्येवं तन्मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात्सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति ।' अथ तथाऽनुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैः शनैर्भक्षिताः । अतो वयं ब्रूमः—'उपायं चिन्तयेत्' इति ॥ तदनेन पापबुद्धिना उपायश्चिन्तितो नापायः । ततस्तत्फलं प्राप्तम् ।' अतोऽहं ब्रवीमि—'धर्मबुद्धिः कुबुद्धिश्च' इति ॥

एवं मूढ, त्वयाऽप्युपायश्चिन्तितो नापायः पापबुद्धिवत् । तन्न भवसि त्वं सज्जनः, केवलं पापबुद्धिरसि । ज्ञातो मया स्वामिनः प्राणसंदेहानयनात् । प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यं च । यदि त्वं स्वामिन एनां दशां नयसि तदस्मद्विधस्य का गणना । तस्मान्ममासन्नेन भवता न भाव्यम् । उक्तं च—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः' ॥ २७४ ॥

दमनक आह—'कथमेतत् ।' सोऽब्रवीत्—

## लौहतुला वणिक्पुत्र कथा ।

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च

विभवक्षयाद्देशान्तरगमनमना व्यचिन्तयत्—

यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः ।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ २७५ ॥

तस्य च गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुलाऽऽसीत् । तां च कस्यचिच्छ्रेष्ठिनो गृहे निक्षेपभूतां[1] कृत्वा देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच—'भोः श्रेष्ठिन्, दीयतां मे सा निक्षेपतुला ।' स आह—'भोः, नास्ति सा । त्वदीया तुला मूषिकैर्भक्षिता ।' जीर्णधन आह—'भोः, श्रेष्ठिन्, नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति । ईदृगेवायं संसारः । न किंचिदत्र शाश्वतमस्ति । परमहं नद्यां स्नानार्थं गमिष्यामि । तत्त्वयाऽऽत्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं[2] प्रेषय' इति । सोऽपि चौर्यभयात्तस्य[3] शङ्कितः स्वपुत्रमुवाच—'वत्स, पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति । तद्गम्यतामनेन सार्धं स्नानोपकरणमादाय' इति । अहो, साध्विदमुच्यते—

अत्यादरो भवेद्यत्र कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या, परिणामे सुखावहा[4] ॥ २७६ ॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन

---

१—निक्षेपभूतां—न्यासरूपां ( धरोहर के रूप में रख कर ) ।
२—स्नानोपकरणं हस्ते यस्य तम् ।
३—अत्र सम्बन्ध विवक्षया अपादाने षष्ठी ।
४—या शङ्का परिणामे सुखावहा भवति इति सम्बन्धः ।

सह प्रस्थितः । तथाऽनुष्ठिते वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाऽऽच्छाद्य सत्वरं गृहमागतः पृष्टश्च तेन वणिजा—'भो अभ्यागत, कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गतः' इति । स आह—'नदीतटात्स श्येनेन हृतः' इति । श्रेष्ठ्याह—'मिथ्यावादिन्, किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति । तत्समर्पय मे सुतम् । अन्यथा राजकुले निवेदयिष्यामि' इति । स आह—'भोः सत्यवादिन्, यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति । तदर्पय मे तुलाम्, यदि दारकेण प्रयोजनम् ।' एवं तौ विवदमानौ द्वावपि राजकुलं गतौ ।

तत्र श्रेष्ठी तारस्वरेण प्रोवाच—'भोः, अब्रह्मण्यम् अब्रह्मण्यम् ।[१] मम शिशुरनेन चौरेणापहृतः' । अथ धर्माधिकारिणस्तमूचुः—भोः, समर्प्यतां श्रेष्ठिसुतः ।' स आह—'किं करोमि । पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः ।' तच्छ्रुत्वा ते प्रोचुः—'भो, न सत्यमभिहितं भवता । किं श्येनः शिशुं हर्तुं समर्थो भवति ।' स आह—'भो भोः, श्रूयतां मद्वचः ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः' ॥ २७७ ॥

ते प्रोचुः—'कथमेतत् ।' ततः श्रेष्ठी सभ्यानामग्र आदितः सर्वं वृत्तान्तं निवेदयामास । ततस्तैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन संतोषितौ । अतोऽहं ब्रवीमि—'तुलां लोहसहस्रस्य' इति ॥ तन्मूर्ख, संजीवकप्रसादमसहमानेन त्वयैतत्कृतम् ।

---

१—अब्रह्मण्यम् अब्रह्मण्यम्—परित्रायताम् परित्रायताम् ।

तन्मूर्ख, त्वया हितमप्यहितं कृतम् । उक्तं च--

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ २७८ ॥

दमनक आह--"कथमेतत् ।" सोऽब्रवीत्--

## १६. नृप सेवक वानर कथा ।

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवकोऽन्तःपुरेऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत् । एकदा राज्ञो निद्रां गतस्य, वानरे व्यजनं नीत्वा वायुं विदधति, राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा । व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनःपुनस्तत्रैवोपविशति । ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता[1] तीक्ष्णं खड्गमादाय तस्या उपरि प्रहारो विहितः । ततो मक्षिकोड्डीय गता । तेन शितधारेणासिना राज्ञो वक्षो द्विधा जातं, राजा मृतश्च । तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः ।

अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान्परं पूर्वजन्मयोगेन चौरो वर्तते । स तस्मिन्पुरेऽन्यदेशादागतांश्चतुरो विप्रान्बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान्--'अहो, केनोपायेनैषां धनं लभे ।' इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा । अथवा साध्विदमुच्यते--

असती भवति सलज्जा क्षारं नीरं च शीतलं भवति ।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्तजनः ॥ २७९ ॥

अथ तस्मिन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि । ततस्तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति

[1]—सता = सत् शब्दस्य तृतीयायाः एकवचने ।

गन्तुमुद्यमो विहितः। ततः स धूर्तस्त्रिप्रस्तान्विप्रान्गन्तुमुद्यतान्प्रेक्ष्य चिन्ताव्याकुलितमनाः संजातः। 'अहो, धनमेतन्न किंचिन्मम चटितम्[१]। अथैभिः सह यामि। पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि।' इति विचिन्त्य तेषामग्रे सकरुणं विलप्यैवमाह—भो मित्राणि, यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः। तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं संजातं, यथा धृतिं क्वापि न धत्ते। यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत।' तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रतिप्रस्थिताः।

अथाध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वाङ्क्षाः[२] कथयितुमारब्धाः[३] :—रे रे किराताः, धावत धावत। सपादलक्षधनिनो यान्ति। एतान्निहत्य धनं नयत।' ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः। परं धनं किंचिन्न लब्धम्। तदा तैः किरातैरभिहितम्—भोः पान्थाः, पुरा कदापि ध्वाङ्क्षवचनममृतं नासीत्। ततो भवतां संनिधौ क्वापि धनं विद्यते तदर्पयत। अन्यथा सर्वेषामपि वधं विधाय चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः' इति।

तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम्—यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति, तदापि

१—चटितम्—हस्ते लग्नम्।

२—ध्वाङ्क्षा—काकाः। ३—अब्दः—वर्षम्।

मां वधिष्यन्ति। ततोऽहं पूर्वमेवात्मानमत्र समर्प्य एतान्मुञ्चामि। उक्तं च—

मृत्योर्बिभेषि किं बाल न स भीतं विमुञ्चति।
अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥ २८० ॥

तथा च।

गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम्' ॥ २८१ ॥

इति निश्चित्याभिहितम्—'भोः किराताः, यद्येवं ततो मां पूर्वं निहत्य विलोकयत।' ततस्तैस्तथाऽनुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि—'पण्डितोऽपि वरं शत्रुः' इति।

अथैवं संवदतोस्तयोः संजीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुर्वसुंधरापीठे निपपात। अथ तं गतासुमवलोक्य पिङ्गलकस्तद्गुणस्मरणाद्रहृदयः प्रोवाच—'भोः, अयुक्तं मया पापेन कृतं संजीवकं व्यापादयता। यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म। उक्तं च

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ २८२ ॥

भूमिक्षये राजविनाश एव
भृत्यस्य वा बुद्धिमतो विनाशे।
नो युक्तमुक्तं ह्यनयोः समत्वं
नष्टाऽपि भूमिः सुलभा न भृत्याः ॥ २८३ ॥

तथा मया सभामध्ये स सदैव प्रशंसितः। तत्किं कथयिष्यामि

तेषामग्रतः । उक्तं च—

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा' ॥ २८४ ॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह —'देव, कातरतमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि । तन्नैतदुपपन्नं भूभुजाम् ।

पिता वा यदि वा भ्राता पुत्रो भार्याऽथवा सुहृत् ।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम् ॥ २८५ ॥

तथा च ।

राजा घृणी ब्राह्मणः सर्वभक्षी,
स्त्री चात्रपा दुष्टमतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी[१]
त्याज्या अमी यश्च कृतं न वेत्ति॥ २८६ ॥

अपि च ।

अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।[२]
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम् ॥ २८७ ॥

तथा च ।

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।

---

१—घृणी दयावान् । अत्रपा—निर्लज्जा । प्रेष्यः—भृत्यः । प्रतीपः—प्रतिकूलः ।

२—यः अत्याचारं अनिष्टं च करोति तमेव पूजयन्ति जनाः । अकृतोपद्रवो महानपि न पूज्यते इति भावः । तार्क्ष्यः—गरुड़ः ॥

गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः' ॥ २८८ ॥

एवं तेन संबोधितः पिङ्गलकः संजीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रभेदो नाम प्रथमं तन्त्रं समाप्तम् ।

# शब्दार्थ संग्रह
## ( कथा मुखम् )

१. पृष्ठ—नामधेयं-नाम । विश्वं-संसार । वाचस्पतिः-बृहस्पति, देवताओं का गुरु । शुक्रः-दानवों का गुरु शुक्राचार्य । पराशरः-व्यास जी के पिता । नयशास्त्रं-नीति शास्त्र । तन्त्रं-अध्याय, प्रकरण । अनुश्रूयते-परम्परा से सुना जाता है । दाक्षिणात्यः—दक्षिण दिशा में स्थित । जनपदः-देश । अर्थिन्-याचक । कल्पद्रुमः-सब कामनाओं को पूर्ण करने वाला कल्प वृक्ष । प्रवरः-श्रेष्ठ । मरीचिः-किरण । मञ्जरी-मुञ्जर । चर्चितः-पूजित । युगलं—जोड़ा । कलाः—गाना बजाना आदि ६४ कलाएं । दुर्मेधाः—मूर्ख । सुमेधाः—समझदार, विद्वान् । सचिवः—मंत्री । विवेकः—विचार । सौख्यं—सुख । आवहति—पहुंचाता है । यावज्जीवं—जीवन पर्यन्त । जडः—मूर्ख । सूते—बच्च पैदा करती है ।

२.—कठिनी—खड़िया, अगुली । सुसंभ्रमात्—अत्यन्त शीघ्र । अम्बा—माता । सुतिनी—पुत्र वाली । वन्ध्या—बांझ ( जिस स्त्री का पुत्र न हो ) । वृत्तिः—आजीविका, वेतन । पञ्चशती—५०० । प्रतिबोधनं—ज्ञान । अशाश्वतः-सदा न रहने वाला । जीवितव्य विषयः—जीवनकाल । प्रभूतं-अत्यधिक । शब्दशास्त्रं-व्याकरण आदि शास्त्र । अपास्य—छोड़ कर । फल्गु-फोक, निःसार । अम्बु—पानी । संसद्—सभा । द्राक्—शीघ्र । अनन्यसदृशः-सब से बढ़ कर । शासनशतं—सौ गांवों के शासन का अधिकार । तथ्य-वचनं-सच्ची बात । ३.—अर्थ लिप्सुः-धन का लोभी । व्यावृत्तः—हटा हुआ । इन्द्रियार्थः—इन्द्रियों के विषय । सरस्वती विनोदः—विद्या से मन बहलाव करना । देवमार्गः—स्वर्ग, सद्गति । अर्हति—योग्य है । असंभाव्या—असंभव । अन्वितः—युक्त । निर्वृतिः—सुख, सन्तोष । मास-षट्कं—छः महीने । पराभवः-तिरस्कार । शक्रः-इन्द्र ।

कण्ठस्थ करने योग्य श्लोक—४, ७ ।

# मित्रभेद

४ पृष्ठ—आदिमः—पहला । गोवृषः—बैल । पिशुनः—दुष्ट, चुगलखोर । जम्बुकः—गीदड़ । भूरिः—बहुत । विभवः—धन, ऐश्वर्य । वणिक्—बनिया, व्यापारी । स्वजनः—सम्बन्धी । स्वजनायते—अपने सम्बन्धी के समान मालूम होता है या व्यवहार करता है । अर्थार्थी—धन का इच्छुक निःस्व—निर्धन । गतवयाः—वृद्ध । वय—आयु । व्यवहारः—व्यवसाय या दुकानदारी । ५. अतिरस्कृतः—सर्व सम्मत, सर्वोत्तम । वितरति—देता है । क्लिष्टा—क्लेशदायक, कठिन । विनयवृत्तिः—नम्रता का व्यवहार । कुसीदः—व्याज । ग्रन्थिशमनम्—मूलधन का नाश । वर्तनं—वृत्ति, आजीविका, पेशा । पण्यसंग्रहः—बेचने योग्य वस्तुओं का संग्रह करना । शस्यते—अच्छा कहा जाता है । गान्धिकव्यवहारः—इतर फुलेल आदि बेचने का व्यवसाय । निक्षेप प्रवेशः—धरोहर लेना । गोष्ठिककर्म-राज भण्डार में अनाज इकट्ठा करना । मिथ्याक्रये कथनम्-कम मोल से खरीदी हुई वस्तु को अधिक मोल की बतलाना । कूटतुलामानं-कपट से तराजू तोलना । भाण्डं बरतन । पण्यं-बेचने योग्य पदार्थ । काञ्चनं—सोना । निक्षेपी-धरोहर रखने वाला श्रेष्ठी-सेठ । हर्म्य-घर । उपयाचितं-मुंह मांगी वस्तु । मानं-माप, बाट ।

६. प्रकृतिः-स्वभाव । किराटः-किराड़ । विचक्षणः-पण्डित । मथुरागामीनि मथुरा ले जाने वाले । धूः-भार । वोढा-ढोने वाला । कच्छः-दलदल वाला किनारा । पंक पूरः-कीचड़ का ढेर । कलित चरणः-जिसका पैर धंस गया है । युगः—जूआ । प्रयाणभंगः-यात्रा का स्थगित करना । विषण्णः-दुःखी । प्रसन्नः-सुखी । सार्थिकः-संघ के सदस्य । सार्थः-व्यापारियों का समूह । भूरि-बहुत । स्वल्पस्य कृते थोड़ी वस्तु के लिये । बह्वपायं—बहुत अनर्थ वाला । सार्थवाहः-व्यापारी संघ का मुखिया । शिशिरं-शीतल ।

७. आप्यायितः—पुष्ट । ककुद्मान्—ऊंचे कन्धे वाला । आरावः-

शब्द। साध्वस:-भय। चतुर्मण्डलावस्थानेन-चारों ओर जंगली पशुओं को बैठा कर। काकरवा:-मध्यम श्रेणी की प्रजायें। किंवृत्ता:-वन की सीमा के समाचार लाने वाले। दौर्मनस्यं-व्याकुलता, चिन्ता। अभिभूत:-सताया हुआ। व्यापार:-प्रयोजन। निधनं-मृत्यु। कीलोत्पाटी-कील उखाड़ने वाला।

क० श्लोक—३, ६, ८, १६।

# कथा १

अभ्याशे-समीप। षण्ड:-समूह। देवतायतनं-मन्दिर। स्थपति:-कारीगर, बढ़ई। ८. आनुषङ्गिकं-अचानक। शिल्पिन्-कारीगर। स्फाटितं-चिरा हुआ। अञ्ज वृक्ष:-काला अंजन नाम का वृक्ष। स्तम्भ:-खम्भा। खदिर कीलकं-खैर की लकड़ी का कील। प्रासाद:-महल। शृंग-चोटी। दारु-लकड़ी। वृत्तम्-हुआ, बीता। प्राक्-पहले। जठरं-पेट। बिभर्ति-भरता है। वयांसि (वयस्)-पक्षी। द्विषत्-शत्रु। बुध:-बुद्धिमान्। प्रथितं-प्रसिद्धि के साथ। आर्यगुण:-श्रेष्ठ गुण। समेतं-युक्त। प्राज्ञ:-बुद्धिमान्। बलि:-अन्न का भाग।

९. सुपूरा-आसानी से या जल्दी से भरने वाली। जातु—कभी। वंश:—कुल या बांस। यौवनहारी—जवानी को नष्ट करने वाला। स्फुरेत्—चमके. मज्जन कुल:—डूबने से घबराया हुआ। तिरस्क्रिया—अपमान। पुर:—सामने। कुधी:-मूर्ख। बिडम्बनम्-तिरस्कार या उपहास। पट:—कपड़ा। राग:-रंग। आसन्न:—समीप वाला। अकुलीन:—नीच वंश में उत्पन्न। असंस्कृत-असभ्य, अविनीत। प्रमदा—स्त्री। परिवेष्टयन्ति-लपेट लेती हैं। १०. कोपप्रसादवस्तूनि—क्रोध और खुशी की चीजों (कारणों) को। विचिन्वन्ति-खोजते हैं। धुन्वतं-दूर हटाते हुए, धुत्कारते हुये। आरोहन्ति-सवार होते हैं अर्थात् वश में कर लेते हैं। पार्थिव:—राजा। महेच्छ:—महत्वाकांक्षी। दुराराध्य:-कठिनता से

सेवा करने योग्य। महीभुक्-राजा। जाड्यं--मूर्खता। ख्यापितम्—प्रकट किया है। कियती मात्रा—कौन बड़ी वस्तु है। कर्तुमनाः—करने की इच्छा वाला। सन्धिः—मेल। विग्रहः—लड़ाई। यानम्—चढ़ाई करना। आसनं—अपने ही राज्य के किसी सुरक्षित स्थान (किले आदि) में जा बसना। संश्रयः दूसरे राज्य में आश्रय लेना। द्वैधीभावः—अन्दर बाहर एक जसा न होना, दोहरी चाल चलना। उदीरितः—कहा हुआ। अर्थः—विषय। हयः—घोड़ा। नागः—हाथी। चोदिता—प्रेरणा किये हुए, हांके हुये। ऊहति—जान लेता है। इंगितं—इशारा। परेङ्गितज्ञानफलाः—दूसरों के इशारे से ही सब बात को जान वाली। विकारः—विकृति, बदलना। साचिव्यपदवी—मन्त्रीपदवी।

११. उत्सङ्गः—गोद। सुवर्णपुष्पिता—सोने रूपी फूलों से लदी हुई। कृतविद्यः—विद्वान्। सुकृष्टः—अच्छी तरह से हल चलाये हुये। ऊषरः—ऊसर भूमि। अर्कः—आकड़े का पौधा। प्रतिहारः—द्वारपाल। मन्त्रः—सलाह। कलत्रं—स्त्री। राजवल्लभः--राजा का प्यारा। अग्रगः--आगे चलने वाला। अनुगः—पीछे चलने वाला। यमदूताभः—यमराज के दूत के सदृश। हाला—शराब। हलाहलः—तेज विष। संमतः—प्यारा। विभुः—राजा। व्यतिक्रमेत्—उल्लंघन करे। कृच्छ्रं—आपत्ति। द्वेषिन्—शत्रु। आह—कहता है। शरण यद्वत—घर के समान। प्रवासः—परदेश में निवास। योषित्—स्त्री। वल्गु—सुन्दर। वल्गन्ति—प्रकट होती हैं, निकलती है। अप्राप्त कालं—अवसर के प्रतिकूल बेमौके के। अवज्ञानं—तिरस्कार। पुष्कलं—बहुत।

१२. द्वाःस्थः—दरवाजे पर स्थित द्वारपाल। अपसार्यताम्-हटा दो। वेत्रलता—बेंत की छड़ी। अव्याहतप्रवेशः जिसके प्रवेश में कोई रुकावट नहीं द्वितीय मण्डलभागी राजा के बाद दूसरे पद (सिंहानुयायी पद) का अधिकारी। निर्दिष्टः—बताया हुआ। कुलिशः—वज्र। मानपुरःसरं—सम्मान

पूर्वक। निष्कोषणकः-कुरेदने का उपकरण। कण्डूयनकः-खुजलाने का उपकरण। ईश्वरः-समर्थ पुरुष। अङ्ग-हे प्यारे (सम्बोधन)। अन्वयः-वंश। पृष्ठगामिनः-पीछे चलने वाले। प्रभवामि-समर्थ हूं, काम कर सकता हू। क्रमायातः-पिता या पितामह आदि के क्रम से आया हुआ। समीयमानः-बराबरी दिया जाता हुआ। परिहीयमाणः छोड़ दिया गया है।

१४. धुरि—आगे (उच्च पद पर)। कनक-सोना। त्रपु-सीसा, रांगा। विरौति-शब्द करती है। वचनीयता-निन्दा। योजयिता-जोड़ने वाला। विद्यमानगतिः—जिसके पास उपाय है, बेबस नहीं। विशेषः-भेद। काचः—शीशा। विकल्पते—सन्देह करती है। सन्निधौ-समीप। अर्घन्ति-उचित मूल्य पर बिकते हैं। आभीरः अहीर। वराटः-कौडी। गोपः—ग्वाला। चन्द्रकान्तं—एक विशेष मणि जो चन्द्रमा की किरण पड़ने से जल छोड़ने लगती है। विपणन्ति—बेच देते है। निर्विशेषं-बिना भेदभाव के। वर्तते—व्यवहार करता है। परस्परनिबन्धनः—एक दूसरे पर आश्रित। वृत्तिचक्रं—व्यवहार रूपी चक्र, सिलसिला।

१५. स्नेहः—प्रेम, चिकनाई। विरज्यन्ते—प्रेम करना छोड़ देते हैं, खराब हो जाते हैं। उपकुर्वते—उपकार करते हैं। मितं—थोड़ा। अर्हः-योग्य। दुरुक्तः—बुरा भला कहा हुआ, डांटा हुआ। महीभुक्—राजा। तप्यते—दुःखी होता है। आद्यः—इत्यादि। स्वाकारं रक्षयेत—अपने मनोभाव को छिपाये रखता है। सांग्रामिकी-युद्ध विषयक। भविष्यं-भविष्य में होने वाले। वार्ता—समाचार। प्रसन्नास्यः—प्रसन्न मुख वाला। उडुः-तारा। उडुराट्-चन्द्रमा। नियोग संस्थिते—अधिकार या पद पर आरूढ़ होने पर। आहितम्—रखा हुआ। समीहता-चाहने वाले (३ या विभक्ति)। अवज्ञा—तिरस्कार।

१६. कौशेयं—रेशम। उपलः—पत्थर। दूर्वा—दूब घास। गोरोम—गौ का रोम (बाल)। तामरसं—लाल कमल। शशांकः—चन्द्रमा।

उदधिः-समुद्र। इन्दीवरं-नील कमल। गोभयं—गोबर। अहिः-सांप। गोपित्तं—गौ का पित्ताशय। रोचना—गोरोचना। चिरंतनः-पुराना। विश्रब्धं—निःशंक होकर। वक्तुकामः-कहने का इच्छुक। अभिप्रेतं-अभिप्राय, मन का भाव। विज्ञाप्यं-प्रार्थना। षट्कर्णः-छः कानों में गई हुई अर्थात् तीन मनुष्यों से सुनी हुई। संसद्—सभा। प्रवृत्तः-तत्पर हुआ २। सविलक्षस्मितम्—लज्जा तथा मुस्कराहट के साथ। दाराः-स्त्री। स्वजनः-सम्बन्धी।

१७. गोप्यं-छिपाने योग्य। युक्तं-उचित। महतः अनुरोधात्—बहुत आग्रह के कारण। निरन्तरचित्तः—अभिन्न हृदय वाला। अनुवर्तिन्—पीछे चलने वाला, अनुकूल। सौहृदं—मित्रता। सत्त्वं प्राणी। शब्दानुरूपं-शब्द के समान। अयुक्तम्-अनुचित। अम्भस्-पानी। सेतुः-पुल। पैशुन्यं-चुगलखोरी। आतुरः रोगी, दुःखी। मृदङ्गः पखावज, तबले की तरह का एक बाजा। वेणुः—बांसुरी। वीणा—सितार। तालः—खड़ताल, मजीरा। पटहः—बड़ा नगाड़ा, ढोल। काहलः—तुरही। उत्कटः—तीव्र, कठोर। हीयते—छूट जाता है। निदाघः—ग्रीष्म ऋतु। सिन्धुः-समुद्र। उद्धतः-प्रबल वेग वाला, क्षुब्ध। नितरां—अत्यन्त।

१८. विरलः—अनोखा। शक्ति वैकल्यं—शक्ति का अभाव। निःसारत्वात्—निर्बल होने के कारण। लघीयस्— बहुत छोटा। जन्मिन्-प्राणी। गतिः—दशा। जतु—लाख। जतुजं—लाख का बना हुआ। अवष्टम्भः-सहारा। मेदस् ( न० )—चर्बी।

क० श्लोक—१६, २०, २२, २६, २८, ३०, ३६, ४०, ४१, ४३. ५४, ५६, ५७, ५६, ६०, ६८, ७८, ८१, ८४, ८७, ८८।

# कथा २

क्षुत्—भूख। क्षामः—सूखा, क्षीण। वल्ली—लता। विमर्शयेत्—सोचे। संतापः—कष्ट। १६. असृक्—खून। परुषं—कठोर। अवगुण्ठितं-मढ़ा हुआ। परिग्रहः—परिवार। प्रतिपालय—प्रतीक्षा कर। कृत्याकृत्यं—

कर्तव्याकर्तव्य । भीः—भय । आहेयं-सांप ( अहि ) वाला । प्रविशेत्-घुस सकता है । संधार्यः-पास रखना चाहिये । भूतिः-कल्याण । २०. उभय वेतनः—दोनों ओर से वेतन लेने वाला, विश्वासघाती । दुष्टबुद्धि—दुर्भावना रखने वाला । भ्रष्टाधिकारित्वात्—अधिकार से च्युत होने के कारण । विमानितः-अपमानित । चिकीर्षितं-इच्छा । विश्वस्ताः-विश्वास में आये हुए । आयुष्यं-दीर्घ आयु । संधितः-संधि किये हुए । वृत्र—वृत्र नाम का असुर जिसे इन्द्र ( शक्र ) ने मारा था । एकाकी-अकेला । शोभनं आपतितम्—बहुत अच्छा हुआ । कौलीन्यात्-कुलीन होने के कारण । वाक्ये प्रवर्तते—कहने में आता है, बात मानता है । सापदं-आपत्ति में फंसे हुए ।

२१. सकाशं—समीप । अपि—क्या (वाक्य के आदि में आने पर) । पुरः—सामने । भुभूक्—राजा । द्रुतं—शीघ्र । व्यलीकः—बुरा भाव । कर्हिचित—कभी । भवान्तरं—दूसरा जन्म । भवः—जन्म । प्रभञ्जनः—तेज आंधी । २२. नितान्त बलः—अत्यधिक बल वाला । नागः हाथी । सोच्छ्वासम्—ऊंचा सांस लेकर । असाध्य असम्भव । पदातिः-पैदल । अध्यारोपितः-स्थापित किया गया है । अद्यप्रभृति—आज से लेकर । प्रसादः—कृपा । निग्रहः—दंड । साक्षेपं-तिरस्कार पूर्वक । आकारयति—बुलाता है । नदसि -आवाज करते हो । गतायुः—मरा हुआ । साधु समाचारः—उत्तम व्यवहार वाला । वचन पटुः—बातचीत में चतुर । पर्यन्तः—सीमा ।

२३. प्राकृतं-साधारण, मामूली । वाहन भूतः - सवारी के काम में आने वाला । महेश्वर-महादेव । कालिन्दी—यमुना । परिसरः—किनारा, आस पास की भूमि । व्यालाकीर्ण- हिंस्र पशुओं से व्याप्त । चण्डिका-पार्वती, शिवजी की पत्नी । विषयीभूतम्-आधीन प्रदेश । नेयः—बिताना चाहिये । प्रतिपन्नम्—मान लिया । दापयितव्यः दिलवानी चाहिये । अभय दक्षिणा-निर्भयता का दान । स्वामी प्रमाणं—आप ही

मालिक हैं। वाचयित्वा-कह कर। भिन्न संधानं-फटों हुओं को मिलाना। भिषक्—वैद्य। सान्निपातिकं—एक दुःसा य रोग जिसमें तीनों दोष कुपित हो जाते हैं। व्यज्यते—प्रकट होती है। प्रज्ञा—बुद्धि।

२४. वशगः—आधीन। सप्रश्रयं—विनय के साथ। विश्रब्धं—निःशंक होकर। समय धर्मेण—शपथ या समझौते के अनुसार। स्वप्रभुतया—अपने को स्वामी समझते हुए। आखेटकः—शिकार। धर्मेण—रीति से, तरीके से। पीनं—स्थूल। आयतं—विस्तृत। कुलिशः—वज्र। विजनः—निर्जन। २५. वयस्यः—मित्र। यदृच्छया—अकस्मात्। उपनतं-प्राप्त। सकृत्—एक बार। संगतम्—मेल। अज—नष्ट न होने वाला। अभ्यासक्रमः—धीरे २ बढ़ना। शास्त्रावगाहनं—शास्त्रों का मन्थन, अभ्यास, प्रवेश। प्रागल्भ्यं—चतुरता। स्तोक—थोड़ा। अरण्यधर्मः—जंगलीपन, शिकार व मांस भक्षणादि से तात्पर्य है। ग्राम्यधर्मः—ग्राम की आदत, दया तथा घास आदि खाने से तात्पर्य है। वियोज्य—अलग करके। संयोज्य—मिला कर। नियोजितः—लगा दिया। प्रत्यहं—प्रतिदिन। रहसि—एकान्त में। अण्डजः—पक्षी। वृत्तिभङ्गात्—आजीविका न रहने से। कालातिक्रमणं—समय बिताना। २६. क्ष्मा—पृथिवी। क्ष्मापः-राजा। आतुरः—रोगी। दिवानिशं—दिन रात। जलजा—मछली। उपजीवन्ति—सहारे जीते हैं। अप्रधानता—गौणता। अनुरक्तः—प्रेमी। पराङ्मुखः—मुंह फेरे हुए। अम्बिका सुतः—धृतराष्ट्र। कुञ्जरः—हाथी।

२७. उन्मार्गः—विपरीत मार्ग। वाच्यता—निन्दा। महामात्रः—मन्त्री, धीवान्। स्वहस्तेन अंगाराः कर्षिताः—अपने हाथ से अंगारे पकड़े हैं (अपने हाथ से कांटे बोए हैं—हिन्दी [illegible]वरा)। व्यतिकरः—घटना, गड़बड़। इषुः—बाण। धनुष्मान्—धनुर्धारी। सनायकम्—राजा समेत। मायाप्रपञ्चः—छल कपट से प्रयोग। विश्लेषयति—अलग करता है। स्फोटयिष्यामि—फोड़ दूंगा। मायाप्रवेशः—छल कपट का

प्रयोग। विघातः—नाश। गूढ़बुद्धिः—चालाक। विधुरः—प्रतिकूल। घुणाक्षरन्यायः—अचानक। पोतः—जहाज। सांयात्रिकः—समुद्र का व्यापारी। पुरुषसिंहः—शेर के समान वीर पुरुष। कापुरुषः—कायर मनुष्य। पौरुषं—उद्योग। २८. कनकसूत्रं—सोने का हार। निपातितः—मार दिया।

क० श्लोक—६१, ६२, ६५, ६७, १०२, १०५-११०, ११८, १२०—१२३।

## कथा ३

न्यग्रोधपादपः—वट वृक्ष। दम्पती—पति पत्नी का जोड़ा। अपत्यं—सन्तान। निर्वृतिः—शान्ति, सुख, निश्चिन्तता। प्राणसंशयः—जान का खतरा। २६. हेतिः—शस्त्र। परिभूयते—परास्त होता है। लौल्यम्—लोभ। कर्कटः—केकड़ा

## कथा ४

प्रकरः—समूह। उपलक्षितं—जाना। अदनं—भक्षण। ३०. संपद्यते लग्ना—होने वाली है। दैवज्ञः—ज्योतिषी। शनैश्चरः—शनि ग्रह। रोहिणी शंकटं-शकट (रथ) की आकृति बनाते हुए रोहिणी नाम के चारों तारों का पुञ्ज। भौमः-मंगल नक्षत्र। शुक्र--शुक्र नक्षत्र। तोयं--जल। मकरः--मगरमच्छ। गोधा--गोह। शिशुमारः--'सुइस'। जलहस्ती--दरयाई घोड़ा या बड़ी ह्वेल मछली। कच्छपः--कछुआ। पद्मिनी--कमल बेल। खण्डः--समूह। मण्डितं--शोभायमान। आपन्नः--प्राप्त हुआ हुआ। ३१. समन्तात्--चारों ओर। दुष्टाशयः--दुष्टमन वाला। आमिषाहारः--मांसभक्षण। रञ्जयन्--प्रसन्न करता हुआ। संभाषः--बातचीत। प्राण--त्राणं--प्राणों की रक्षा। निर्विण्णः--उकता गया हूं। व्यञ्जनस्थानं--चटनी की जगह। वध्यशिला--मारने का पत्थर। शिलाश्रयं--चट्टान पर स्थित। अस्थीनि--हड्डियां। अतिश्रान्तः--बहुत थक गया। मन्दधीः--मूर्ख। प्रभ-

ऋति--समर्थ नहीं। प्राणयात्रा--आजीविका का उपाय। दंष्ट्र--दांत। मृणालः--भिस। धवलाः--सफेद। मातुलः--मामा।

३२. कृतक्षणः तिष्ठामः--अवसर की प्रतीक्षा कर रहे हैं। प्रमादिन्--असावधान! कनकसूत्रं--सोने की कण्ठी। हारः--मोतियों की माला। कोटरः--खोल। न्यस्तः--रखा है। मुक्तः--छोड़ दिया है। मुक्ताहारः--मोतियों का हार। कञ्चुकी—अन्तःपुर का सेवक। वर्षधरः—नपुंसक, हिजड़ा। अनुययुः—पीछा करने लगे। प्रसारित भोगः—फण फैलाये हुए।

## कथा ५

३३. वीर्यातिरेकात्—बल के अधिक होने के कारण। उपरराम—रुका, शान्त हुआ। अन्वेद्युः—अगले दिन। सारंगः—हिरण। वराहः—सूअर। समयधर्मः—समझौता, सौदा। अद्यप्रभृति—आज से लेकर। उच्छेदनं—नाश। रसायनं—पुष्टिकारक औषधि च्यवनप्राश आदि। शस्यं—अन्न। कोशः—खजाना। वर्धनम्—बढ़ाने वाला। स्नेहः—तेल। संहरन्—छीनता हुआ। गुणः—स्नेहादि उत्तम गुण, रस्सी व बत्ती। शुभ्रं—उत्तम, सफेद। ३४. अनुग्रहः—कृपा। नरेश्वरः—राजा। संक्षयः—नाश। श्वापदः—हिंस्र पशु। निर्वृतिभाक्—परमानन्द मग्न। कलत्रं—स्त्री। वेला—समय। अतिक्रमणं—लंघन, टालना। भव्यः—सुन्दर। प्रकोप्य—गुस्सा दिला कर। दिन शेषः—सायंकाल। सृक्कणी-दोनों होठों के किनारों को। परिलेलिहत्—चाटता हुआ। निःसत्त्वं—पशुओं से रहित। प्रज्वलितात्मा—क्रुद्ध मन वाला। भर्त्सयन्—झिड़कता हुआ।

३५. उच्छेदयिष्यामि—नष्ट कर डालूंगा। प्रस्तावः—मौका, वारा। सकाशे—समीप। समयधर्मेण—प्रतिज्ञा के अनुसार। चौर रूपी—चोर जैसा। धृत्वा—रख कर। मृगकोपः—पशुओं पर आया हुआ गुस्सा। स्वस्थः—शान्त। परिभवः—तिरस्कार। दुर्गाश्रयः—किले में रहने वाला। ३६. विष्कम्भिताः—रोक लिये गए। दुःसाध्यः—कठिनता से वश में

आने वाला। संघत्ते-मुकाबिला करता है। प्राकारः—परकोटा, किले की चहार दीवारी। नागः-सांप। वश्यः—आधीन। प्रशमः-शान्त करना, दबाना। उत्तिष्ठमानः-बढ़ता हुआ। उपेक्ष्यः—उपेक्षा करने योग्य। पथ्यं—हित। शिष्टः-श्रेष्ठ पुरुष, विद्वान्। आम्नातः-कहा गया है। वर्त्स्यन्तौ-बढ़ते हुए दोनों। आमयः-रोग। साध्यः-वश में होने योग्य। व्याधिः-रोग। ३७. व्यवस्थितः—चल दिया। सोढुं-सहने के लिये। प्रतिबिम्बं—परछांई। सिंहनादंमुमोच-गर्जना की। प्रतिशब्दः-प्रतिध्वनि। नादः-शब्द। समुत्थितः-उठा। आनन्द्य-प्रसन्न करके। प्रशस्यमानः—प्रशंसा किया जाता हुआ। यथासुखं—सुखपूर्वक। पन्थाः-मार्ग। शिवः-सुखकारी। यथाभिप्रेतं—जैसा चाहो वैसा। अनुष्ठीयताम्—करो। वियुक्तः—रहित। साभिप्रायं—विशेष अभिप्राय वाले। वक्तुमनाः—कहने की इच्छा वाला। कथनीयं-कहने योग्य बात। युष्मत्पादः-पूजनीय आप। द्रोह बुद्धिः-विद्रोही मन वा।

३८. विजने-एकान्त में। सारासारता-शक्ति और कमजोरी। सारः-बल। आधिपत्यं- अधिकार। समन्वितं-सहित। वज्रसारः—फौलाद। दारुणं-भयंकर। वचः—वचन। मोहः-मूर्छा। उपगतः-प्राप्त हुआ हुआ। रागः—प्रेम। प्रमाणं-सर्वाधिकारी। मोहः—मूर्खता। मदः-अभिमान। दास्यं-नौकरी। निर्विद्यते-ग्लानि को प्राप्त होता है, उकता जाता है। है। निर्विण्णः-उकताया हुआ। पदं-स्थान। स्वतन्त्र स्पृहा—स्वतन्त्र होने की इच्छा। अभिद्रुह्यते-द्रोह करता है। युक्तम् उचित। चेतना-होश। ऐकान्तिकं- निश्चित। पर्युपासते-सेवा करते हैं। चित्तवृत्तिः—मन का भाव। विकृतिः-विकार।

३९. दुष्टः—दूषित हुआ हुआ। कायः-शरीर। वल्लभः-प्यारा। व्यलीकम्—विपरीत कर्म। आरोपयति—डालता है। भाजनं—पात्र-अधिकारी। शष्पभोजी-घास खाने वाला मांसाशिन्-मांस खाने वाला।

साहाय्यं–सहायता । दूषयित्वा–दोष लगाकर । मन्युः—क्रोध । प्राप्तश्रीः–लक्ष्मी प्राप्त किये हुए । अर्हति—योग्य है । असाम्प्रतं–अनुचित है । ४०. आदौ–शुरू में । प्रणयिन्—मित्र । प्रणयः—प्रेम । उत्क्षिप्य—उछाल कर । क्षिपति–गिराता है । गुणः--लाभ । अपकारिन्--हानि पहुंचाने वाला । तुल्यार्थः--समान धन वाला । मर्मज्ञं-गुप्त रहस्य को जानने वाला । सखित्वात्—मित्र होने के कारण । परिजनः—सेवक । विरक्तिः–वैराग्य । मांसादः– मांस खाने वाला । प्रकृतयः—प्रजायें । आखेटकं–शिकार । मुक्ता–मोती । पयस्–जल । नलिनी–कमलिनी । राजते – चमकता है । स्वातिः–एक विशेष नक्षत्र । शुक्तिः-सीप । कुक्षिः—कोख, मध्य । मौक्तिकं-मोती । ४१. संवासः-सहवास । विक्रिया-बिगाड़, विकार । प्रसङ्गः—संगति । गोहरणं—गौओं का चुराना । वर्जयति—छोड़ देता है । प्रतिश्रयः—आश्रय, सहारा । मत्कुणः—खटमल ।

क० श्लोक—१३०, १३१, १३४, १३६, १४०, १४३, १४५, १४७—१५२ ।

## कथा ६

यूका— जूं । रक्तं—खून । वक्ति—कहता है । गृहमेधिन्—गृहस्थी । निगदितः– कहा है । स्मार्तः—स्मृति शास्त्रों को जानने वाला । लघुः—छोटा, साधारण । स्वर्गदः– स्वर्ग को देने वाला । मानुषः—मनुष्य । आस्वादितं– चखा है । कटु—कड़वा । तिक्तः-तीखा । कषायः-कसैला । अम्लं-खट्टा । व्यञ्जनं-चटनी । पानं—पीने के शर्बत आदि रस । चोष्य-चूसने योग्य पदार्थ लेह्यं–चाटने योग्य अवलेह आदि पदार्थ । मिष्टं-मीठा । सौख्यं—सुख । उदरार्थतः—पेट के प्रयोजन से । बुभुक्षा—भूख । अर्थनीयम्– मांगना चाहिये । शपथः– सौगन्ध । प्रकृष्टं-अत्यधिक । अदशत्—डस लिया । शीतांशुः-चन्द्रमा । दहनात्मक—जलाने वाला । मर्त्यः-मनुष्य । सूची—सूई । विद्धः—बींधा हुआ । शयनं-बिस्तरा ।

प्रच्छादन पटः—ओढ़ने की चादर। वीक्षां चक्रुः देखने लगे। संधिः—जोड़। नोचेत्-नहीं तो। आभ्यन्तराः—अन्दर के, निकट सम्बन्धी। बाह्याः—बाहर के, जिन के साथ कोई सम्बन्ध नहीं, पराये।

क० श्लोक—१५४, १५६, १५७।

## कथा ७

क्षुधा –भूख। क्षुधाविष्टः--भूखा। लौल्यं--लालच। नगरान्तरे—नगर के बीच में। सारमेयः—कुत्ता। प्रत्यासन्नः—पास वाला। रजकः—धोबी। नीलीरसः—नील का रस। सज्जीकृतं—तैयार। आक्रान्तः—आक्रमण किया हुआ। ४४. रङ्गः—रंग। अपूर्वः—विलक्षण। वृकः—भेड़िया। विचेष्टितं—हरकत। पौरुषं—बल। संत्रस्तः—डरा हुआ। व्रजति—जाता है। अभिधा—नाम। वर्तितव्यम्-रहना चाहिये। श्वापदः–जंगली पशु। परिवव्रुः--घेर लिया। शय्यापालत्वम्—बिस्तरे की रक्षा का काम। ताम्बूलाधिकारः--पान लाने का काम। आत्मीयः--निज सम्बन्धी। अर्धचन्द्रः--गलहत्था। निःसारिताः--निकाल दिये। राज्य-क्रिया-राजकीय कर्म।

४५. प्रभुधर्मेण—राजधर्मानुसार। प्रविभज्य—बांट कर। अश्रावि (लुङ्)—सुनाई दिया। पुलकित तनुः—रोमाञ्चित शरीर वाला। तारस्वरः—ऊंची आवाज़। अधोमुखाः – नीचा मुख किये हुए। मिथः—परस्पर। वाहिताः—नौकर बताये गए। खण्डशः—टुकड़े २। प्रत्ययः—विश्वास, प्रमाण। आरक्तं—अत्यन्त लाल। अधरः—निचला होठ। सोद्वेगाकारः—घबराई हुई शकल वाला। अदेयं—न देने योग्य (अमूल्य)। हारितम्—गवा दिया।

४६. व्याधितः—रोगी। प्रवासी–प्रदेश में रहने वाला। श्ववृत्तिः—कुत्ते की सी आजीविका। आख्याता-कही है। प्रजल्पितम्-कहा है। स्वच्छन्दं—अपनी इच्छा से। श्वा—कुत्ता। शासनं—आज्ञा। भूशय्या—

ज़मीन पर सोना । कृशत्वं-पतला होना । लघु भोजनं—हलका भोजन । यतिः—संन्यासी । विशेषः—भेद । मन्त्र भेदः—रहस्य खोलना । चतुष्कर्णतया-चार कानों में सुना कर ( दो व्यक्तियों के बीच में अर्थात् केवल अपने तथा मेरे सामने ) । जीवनं - आजीविका । सामर्षः- गुस्से से भरा हुआ ।

४७. कृत्याकृत्यं - कर्तव्य और अकर्तव्य को । युधि-युद्ध में । संगतः-फंसा हुआ । द्रोणपुत्रः-अश्वत्थामा । प्रतिभाति-पसन्द है । बलीवर्दः-बैल । विषाण-सींग । भैक्षं भिक्षा का अन्न । भारोपजीवनम्-भार उठा कर आजीविका करना । अधिकारेण-मन्त्री आदि अधिकार पाकर । विहिता-की है । मैत्री—मित्रता । निपुष्टः—निर्बल । संगं-साथ । तुरगः ( तुरंगः )—घोड़ा । सुधी—बुद्धिमान् । व्यसनं—आसक्ति, शौक । सख्यम्—मित्रता । प्रसादयामि—प्रसन्न करता हूं ।

४८. उद्दिश्य—लक्ष्य करके, ...... के कारण । प्रकुप्यति—गुस्से होता है । ध्रुवं—निश्चय से । अपगमः—हट जाना । प्रशाम्यति—शान्त हो जाता है । व्यापारः-कार्य । युक्तात्मा-लगे हुए मन वाला । संव्यवहारः-अनुष्ठान, सम्पादन । तत्वं—रहस्य । द्रोहच्युतः—द्रोह से रहित । व्यापत्तिः—विपत्ति । स्खलितान्तरेषु—थोड़े से भी भूल चूक के अवसरों पर । नियता—निश्चित है । सिद्धिः—सफलता । अम्बुपतिः—समुद्र । अवनिपतिः—राजा । शङ्किनी—भयप्रद । भावस्निग्धः—हृदय से प्रेम करने वाला । उपकृतं—किया हुआ उपकार । द्वेष्यता—शत्रुता । अपकृतं-की हुई बुराई । दुर्ग्राह्यत्वात्—जानना कठिन होने के कारण । नैकभावाश्रयाः—अनेक भावों वाले । परमगहनः—अत्यन्त कठिन । अगम्यः—पहुंच से बाहर । अदोषः—निरपराध ।

४९. गुणवत्तरः—अधिक गुणवान् । पात्रं—योग्य व्यक्ति । कान्तिः-चमक । वचन रचनया—बात बनाने से । मायोपजिवनः—कपट से निर्वाह करने वाले ।

क० श्लोक—१७२, १७६; १७८-१८२।

## कथा ८

अनुचरः—सेवक। द्वीपी—चीता। वायसः—कौआ। गोमायुः—गीदड़। सार्थभ्रष्टः—अपने झुण्ड से बिछुड़ा हुआ। आरण्यकं—जंगली। ग्राम्यः—गांव का। भोज्यः—खाने योग्य। अकुतोभयः—सर्वथा निर्भय। घातः—विनाश, मृत्यु। ५०. समुद्भवः—उत्पन्न। भूयः—फिर। भारोद्वहनं—भार ढोना। कष्टभागी—कष्ट पाने वाला। मरकतं—हरे रंग की एक विशेष मणि। आस्ते—रहता है। मुशलं—मूसल। व्यथा—पीड़ा। पदं—कदम। अप्रभुत्त्वेन—स्वामी के न होने के कारण। अन्विष्यतां—ढूंढो। भ्रान्तं—घूमना फिरना। विश्वस्तः—विश्वास पात्र। वध्यः—मारने योग्य।

५१. आसाद्य—पाकर। पथ्याशी—बीमारों के योग्य कुछ हलका भोजन करने वाला। आदेशः—आज्ञा। पिशितं—मांस। पथ्यक्रिया—पथ्य भोजन। पापाधम—नीच पापी। मही—पृथिवी। जीवितव्य—जीवन। नियोजयति—जोड़ता है, पेश करता है। एकतमः—कोई सा एक। क्षुत्—भूख। निरोधात्—रोकने से। अन्त्या दशा-अन्तिम हालत, मृत्यु। ५२. नाभि-रथ के पहिये का मध्य भाग । अरकाः-छोटे २ अरे। वहन्ति—ढो सकते हैं। महती अवस्था—बुरी हालत। अनृणतां-गच्छामः-ऋण मुक्त हो जावें। वाष्पं-आंसू। दृक्-आंख। आश्वासनं धैर्य, ढाढस।

५३. उच्छिष्टं—जूठा। पिण्डं—अन्न। साधुवादः-शाबाश। उभयलोकः—दोनों लोक, यह लोक तथा परलोक। नखायुधत्वात् हिंस्र पशु होने के कारण। अनुवर्तिनाम् पीछे २ चलने वाले, स्वामिभक्त। अक्षयः-चिरस्थायी। धरिणी-पृथिवी। प्राप्तकालं—अवसर पाकर। समर्थयन्ति—पुष्ट करते हैं। ५४. अपसर-हट जाओ। यज्वन्—यज्ञ करने वाला।

प्रोज्झितः—छोड़ा है। चित्रकः—चीता। विदारितोभयकुक्षिः—फाड़ दी गई है दोनों कोख जिसकी ऐसा। क्षुद्रः-नीच। असेव्यः—सेवा न करने योग्य। प्रकृतिः-स्वभाव। अनुरज्यते-प्रेम करती है। समासन्नः-घिरा हुआ। कलहंसः—राजहंस। खन्यमानानि—खोदी जाती हुई। अव-घृष्यन्ति-घिस जाती हैं। उपजापविद्—फूट डालने में कुशल। कर्णजापः-कानाफूसी। मृदु—कोमल। चेतः-- मन।

५५. दंष्ट्रा—दाढ़। पिशुनः—चुगलखोर। खलः—दुष्ट। भुजंगः-सांप। लगति—लगता है। वियुज्यते अलग होता है। गुरुः- बड़ा, माता पिता, आचार्य। अवलिप्तः—गर्वित। कार्याकार्यं—अच्छाई, बुराई को। उत्पथं—कुमार्ग। प्रतिपन्नः—प्राप्त। विधीयते—किया जाता है। निर्वृतिः—शान्ति। श्रेयस्करं—हितकारी। उभौ—दोनों। स्रवत्—बहता हुआ। वक्त्रं—मुख। सोमपानं-सोमरस का पीना। प्रदिष्टम्—कहा गया हैं। विधिवत्—विधि के अनुकूल।

क० श्लोक—१८६-१८८, १६०. १६५-२०१।

# कथा ६

टिट्टिभः—टिटीरा पक्षी। आधत्त-धारण किया। आसन्न प्रसवा—जिस का बच्चा देने का समय निकट है। अण्डकं—अण्डा। विमोक्षणं—छोड़ना, देना। रम्यः-सुन्दर। समुद्रवेला चरति—समुद्र का तट चढ़ जाता है, समुद्र में ज्वार आ जाता है। समाकर्षति—खींच लेता है। मात्रा-सामर्थ्य, मजाल। दूषयिष्यति-खराब कर देगी। प्रसूतिः-सन्तान। भवती (स्त्री०)—आप।

५७. सदनं—घर। अन्तकः-यमराज। आदिशति-कहता है। अजात-भयः-निर्भय। अपहर-छीन लो। विश्रब्धा निश्चिन्त। पुत्रिणी-पुत्र वाली। पक्षिकीटः-क्षुद्र पक्षी। उत्क्षिप्य-ऊपर उठा कर। दिवः (षष्ठी वि०)-आकाश के। द्यौः-आकाश। कल्पितः-रचा हुआ। वेला व्याजेन-

उतार के बहाने से । अपजहार—छीन लिये । प्रलपन्ती—विलाप करती हुई ।

## कथा १०

स्नेहकोटिः—प्रेम की पराकाष्ठा । ५८. वेला—समय । नीड.—घोंसला । जम्बालं—कीचड़ हृदि—हृदय में । जगाद—कहा है । रज्जुः—रस्सी । लघु—छोटी या हलकी । अर्धोक्ते—आधा कहते ही । पुरं—नगर । पौराः—नगर निवासी । अनागत विधाता—भविष्य की बात को पहले से ही कर लेने वाला । प्रत्युत्पन्नमतिः—जिसकी तुरन्त सूझ वाली बुद्धि है । सुखं—सुख पूर्वक । एधेते—दोनों बढ़ रहे हैं, जी रहे हैं ।

## कथा ११

५९. यद् भविष्यः भविष्य की चिन्ता न करने वाला । मत्स्य-जीविन्—मछियारा । बहुमत्स्यः—बहुत मछलियों वाला । ह्रदः—तालाब । कुलिश पातोपमं—वज्र गिरने के समान । आहूय—बुलाकर । अभिहितम्—कहा है । गतिः—सहारा । सुखावहा—सुखकारी । देहभङ्गः—शरीर का नाश । बहुमायाः—अत्यधिक कपटी । ६०. गतिः—प्रवेश । रागः—प्रीति । क्षारं—खारा । प्रोच्चैः—बहुत ऊंचा । आलोड्य—मथ कर । संभावयसि—समझते हो । पिठरं—बटलोही । अतिमात्र—अत्यधिक । दहतितराम—बिलकुल जला देता है । पार्श्वः—पासा, बगल ।

६१. वन्हिः—आग । समुत्सुकः—उतावला । विक्रमन्ते—पराक्रम दिखाते हैं । प्रमाणः—कद, डील डौल । श्यामः—काला । च्युतिः—बहना । गण्डश्याममदच्युतेः—जिस के गण्ड स्थल से काला मद चू रहा है । मूर्धन—सिर । केसरी—शेर । दन्तिन्—हाथी । बालः—बालक, तत्काल निकला हुआ, नया । रविः—सूर्य । पादः—पैर, किरण । भूभृत्—पर्वत, राजा । वयस् (न०)—आयु । उपयुज्यते—काम में आती है । तमस्—अन्धकार । गिरिः—पर्वत । वज्रं—एक प्रकार का शस्त्र । स्थूलः—मोटा । प्रत्ययः—

भरोसा, विश्वास । जाह्नवी—गंगा । विप्रुषः—बूंद । अनिर्वेदः-हिम्मत न हारना । सन्निभा—समान । शुष्यति —सूखता है ।

६२. दुरधिगमः—दुर्लभ । परभागः—दूसरे का हिस्सा या उत्कर्ष । तुला—तुला नाम की सूर्य की एक राशि, तराजू । भास्वान-सूर्य । जलदः—मेघ । पटलं—समूह । विहंगमः-पक्षी । विहंगः-पक्षी । विहगः-पक्षी । असारः-निर्बल । समवायः—मेल । दुर्जयः-जीतना कठिन है । आवेष्टयते-बटी जाती है । नागः-हाथी । चटका-चिड़िया काष्ठकूटः-कठफोड़ा पक्षी । मक्षिका—मक्खी । दर्दुरः—मेंढक । कुञ्जरः-हाथी प्रलय—नाश ।

क० श्लोक—२१२-२१४, २१७, २२० ।

# कथा १२

तमालः—एक विशेष वृक्ष । तरुः—वृक्ष । निलयः—घोंसला, घर । संततिः-सन्तान । घर्मार्तः—धूप से सताया हुआ । छायार्थी—छाया का इच्छुक । पुष्करं-सूंड का अगला हिस्सा । बभञ्ज तोड़ दिया । विशीर्णानि—टूट गए । अतिक्रान्तं—बीता हुआ । विशेषः—भेद, अन्तर । स्मृतः-कहा गया है । ६३. भूतम्—मरा हुआ प्राणी । अपसदः—नीच । अपकृतं—बुराई की है । विषमा-कठिन । व्यसनं-कष्ट । विधेयज्ञः-कार्य-कुशल । भार्या स्त्री, पत्नी । इष्टा—प्यारी । पराभूता—सताई है । स्फोटनं-फोड़ना । भेकः—मेंडक । कियन्मात्रः—क्या चीज़ है । वराकः-बेचारा, दयनीय ।

६४. मन्त्रः—सलाहः । रवः—शब्दः । लालसा-इच्छा । निमीलितः-बन्द । तृषा—प्यास । आर्तः-दुःखी, सताया हुआ । गर्तः—गढ़ा । सपरिकरः-सपरिवार । पञ्चत्वं यास्यति—मर जायेगा । वैरसाधनं—बदला चुकाना । गेयं—गान । मयूरः-मोर । सारसः —सारस पक्षी । अपहारकः-छीनने वाला । वैनतेयः—गरुड । परिभवस्थानं-अपमान का प्रसंग

वैरानृण्यं—शत्रुता का परिशोध । अवलेपः–गर्व । ६५. अब्रह्मण्यम्–अब्रह्मण्यम्—बचाइये, बचाइये; दुहाई हो। गर्हितम्–निन्दनीय कर्म। गतानुगतिकः—देखादेखी पीछे चलने वाला, भेड़चाल वाला। पारमार्थिकः— वास्तविकता को देखने वाला रुत्मान्–गरुड़, पक्षियों का राजा। नारायणः–विष्णु। प्रेषितः–भेजा गया।

६६. वाहनं—सवारी। निग्रहः–दण्ड। वाच्यः–कुछ कहना चाहिये। प्रणयकुपितः–प्रेम से गुस्से हुआ २। श्रीः–सम्पत्ति, कल्याण। त्रपा—लज्जा। ६७. संभावयावः—सान्त्वना दें। अमरावती— देवपुरी। आग्नेयं-आग बरसाने वाला। शरः–बाण। संधाय—चढ़ा कर। उत्तरोत्तरस्नेहः—क्रमशः बढ़ता हुआ प्रेम। विकृतिः—विकार। त्रिशिखा—तीन रेखाओं वाली। भृकुटिः—तेवर, भौं चढ़ाना। निशामुखं—रात्रि का प्रारम्भ काल। ६८. जनपदः–देश। दाराः-स्त्री, पत्नी। सततं–निरन्तर। अनुप्रवेशः–उसी का आश्रय लेना। माया–मोह, ममता। निर्वापणं–बोना। आयत्तं–आधीन। विपश्चित्--विद्वान्। स्तम्भनं--थामना। ६९. विरूपकरणं-विरुद्ध करना, बिगाड़ना। प्रसाधयितुम्--संवारने को। उन्नमितुं--उठाने को। शत्रुभूतः—शत्रु के समान। अपहरणं--छीनना। जिगीषते–जीतना चाहता है। उच्छेद्यः–नाश करने योग्य। प्रच्यावितः–गिरा दिया, हरा दिया। देयः—देना चाहिये। विपुलः–महान्। अवकाशः--अवसर। गौरांग--अंग्रेज जाति। निस्त्रिंश-:-कठोर। इक्षुः--गन्ना। उपमा--सदृश। विकल्पः--सन्देह। गुणत्रयं--तीन लाभ। दूषयसि–दोष देते हो। जाड्यं-मूर्खता। गूढ बुद्धिः--कपट नीति वाला।

क० श्लो०--२२२, २२४, २२७—२३८, २४२--२४५, २४७, २४८।

## कथा १३

अनुगतः--पीछे चलने वाला। ७१. वनगहनं–घना जंगल।

दासेरकः-ऊंट का बच्चा, दासेरकी-ऊंटनी । पिशितं-मांस । स्फोटयति—फोड़ता है । शङ्कुः—कील । यौवन पदवी-युवावस्था । वन्यः--जंगली । मदवीर्यात्-अत्यधिक मद के कारण । क्षत शरीरः-घायल शरीर वाला । प्रतिबोध्य—समझा कर । ७२. सुकृतं-पुण्य । द्विगुणं-दो गुना । प्रतिभूः-मध्यस्थ, साक्षी । व्यवहारः—सौदा । अर्चनं-पूजा । अप्रमत्तः-सावधान । क्षुधालुः—भूखा । ७३. प्रतिपादयिष्यामि—ठहरा दूंगा, सिद्ध कर दूंगा । आस्वादयति-खाता है । विकल्पयति-सन्देह उत्पन्न करता है । रिक्तीकृत-हृदयः-जिसका हृदय खाली कर दिया गया है । परुषतरं—अत्यन्त कठोर । अनादृत्य-परवाह न कर के । दुर्णयतरुः-दुर्व्यवहार रूपी वृक्ष । सार्थः-झुण्ड, काफला । भाराक्रान्तः-भार से लदा हुआ । जम्बुकः-गीदड़ । रौद्रः-भयंकर । धर्मराजः-यमराज । मानं-परिमाण । वैर निर्यातनं-बदला चुकाना, दुश्मनी निकालना ।

७४. प्रनष्टः—भाग गया । शष्पाद-घास खाने वाला । अनुगः-अनुयायी । अश्वतरी-खच्चरी । गरीयसी-श्रेष्ठ, सराहनीय । श्लाघ्यः-प्रशंसनीय । विदारणं-फाड़ना । दानार्थी-मदवारि का इच्छुक । मधुपः-भौंरा । स्खलितगतिः-डगमगाता हुआ । प्रचकितः-विस्मित हुआ २ । संवृत शरीरः—शरीर को सिकोड़े हुए । प्रणामकृतिः-नमस्कार करना । ७५. खरः-तीक्ष्ण । विकर्तितः-काटा हुआ । पृष्ठः—पीठ । उल्लिख्य-रगड़ कर, खोंच लगाकर । पुष्पितः—फूलों से भरा हुआ । पलाशः—ढाक का वृक्ष । काङ्क्षिन्—चाहने वाला । वितन्वन्—बढ़ाता हुआ । अभव्यं-अशोभन, बुरा । दण्डरुचिः-युद्ध प्रेमी । स्वयम्भूः-ब्रह्मा । पापीयान्-अत्यन्त खराब । विनियोजयेत्-लगावे, काम में लावे । शर्करा-खाण्ड । अर्थः-प्रयोजन । पटोलः-कड़वा परवल । पञ्चविधः—पांच प्रकार का ( इसकी व्याख्या ७६ पृष्ठ की टीका में देखो ) ।

७६. सम्पद्यते लग्नः—शीघ्र होने वाला है । विनिपातः—नाश । प्रतीकारः—उपाय । भिन्नसंधानं—फटे हुओं को मिलाना । भिषक्-वैद्य ।

आखुः—चूहा। अन्नपिटम्—अनाज की पिटारी। ७७. श्रद्धधाति—विश्वास करता है। गुणालयः—गुणों का घर, अत्यन्त गुणवान्। असन्मन्त्री—बुरे मन्त्री वाला। प्रसन्नं—स्वच्छ। ग्राहः—मगरमच्छ। अनार्द्रं—न लचकने वाली, कठोर। नमते—झुकती है। दारु—लकड़ी। अश्मन्—पत्थर। क्षुरक्रिया—हजामत।

क० श्लोक—२५०, २५१, २५४—२५६।

## कथा १४

कलेवरं—शरीर। वेपमानः—कांपता हुआ। घनः—बादल। धारा-निपातः—वर्षा की बौछाड़। गुञ्जाफल—रत्ती। अवचित्य—चुनकर। फूत्कुर्वन्तः—फूंक देते हुए। ७८. गुहा—गुफा। साटोपाः—विस्तार वाले, बढ़े हुए अथवा जोश से भरे हुए। अनवरतं—निरन्तर। विरमति—रुकता है। व्यर्थ श्रमत्वात्—परिश्रम व्यर्थ जाने के कारण। आस्फालितः-पटक दिया। उपरतः—मर गया। पत्त्रः—पंख। पयः—दूध। सुगृही—उत्तम घर वाला। निगृही—बे घर बार का।

क० श्लोक—२६०, २६१।

## कथा १५

आवासः—निवास। सुख संस्थः—सुखी। ७९. शाखामृगः—बन्दर। आसारः—वर्षा की बौछाड़, मूसलाधार वर्षा। प्रोद्धूषितं—अत्यन्त कांपता हुआ, रोमाञ्चित। दन्तवीणां—दांत किटकिटाना। मौनव्रता—चुपचाप। धार्ष्ट्यं—ढिठाई। उपहसति—मजाक उड़ाती है। कुलायः—घोंसला। शतधा—सौ तरह से। शिक्षापितः—सिखाया हुआ। संपद्यते—होती है। अस्थाने—अनुचित स्थान में, कुपात्र में। प्रतिच्छन्नः—ढका हुआ। आहितः—रखा हुआ। समरमुखम्—युद्ध क्षेत्र का अग्र भाग। कबन्धः—धड़। धूमः—धूआं।

## कथा १६

८०. उपेतः—युक्त। अर्थोपार्जनं—धन संग्रह। वार्धकभावे—बुढ़ापा।

होने पर। वार्ता—समाचार। देशान्तरं—परदेस। धरणीपीठं-भूमण्डल। सीदावः-कष्ट उठाते हैं। ८१. चलते विचलित हो जाता है। निशीथं-आधी रात। अटवी-जंगल। लोष्ठं—मिट्टी का ढेला। धर्माधिकारिन्-न्यायालयाध्यक्ष, जज। धर्माधिकरणं-न्यायालय, कचहरी। दिव्यार्थे—दिव्य साक्षी के लिये। ८२. मनीषिन्-विद्वान्। प्रत्यूषं—प्रातःकाल। जनकः-पिता। अनिलः-वायु। अनलः—अग्नि। द्यौः-आकाश। आपः-जल। वृत्तम्-आचरण। ८३. हृतम्—चुराया है। संदीपितम्-जला दिया। ईक्षणं—आंख स्फुटितं—फूटी हुई। परिदेवयन्—विलाप करता हुआ। निश्चक्राम—निकल गया। वन्हिभोज्यद्रव्यं—आग से जलने वाले पदार्थ लकड़ी आदि। उपरतः—मर गया। अपायः—हानि। प्राज्ञः—बुद्धिमान्।

क० श्लोक—२६६, २७१।

# कथा १७

अजातपक्षाः—जिनके पंख पैदा नहीं हुए। अपत्यं-सन्तान। वाष्प-पूरं—अश्रुप्रवाह। कुलीरकः—केंकड़ा। ८४. सहज वैरी-स्वाभाविक शत्रु। सत्यानृतं—झूठ भरी सचाई वाला। नवनीतं—मक्खन। प्रबोध्यते-समझाया जाता है। सान्वयः—वंश समेत। कौटिल्यं—कुटिलता। गणना-गिनती। तुला-तराजू। लौहसहस्रं—एक हजार पल लोहे की अर्थात् १ मन २२॥ सेर लोहे की। श्येनः-बाज।

# कथा १८

वणिक्—बनिया। विभवः-धन। वीर्यं—पराक्रम। घटिता-बनी हुई। शाश्वतं-स्थायी। सदा रहने वाली। आत्मीयः—अपना। शिशुः-छोटा बच्चा। उपकरणं—सामग्री। ८६. दारकः-बालक। आदितः-शुरू से लेकर।

# कथा १६

८७. अंग सेवकः -अंगरक्षक । प्रसरः—आना जाना । व्यजनं—पंखा । असिः-तलवार । द्विधा-दो टुकड़ों में । असती—दुराचारिणी स्त्री । दम्भी—ठग, कपटी । ८८. चरितम्-हाथ लगा । धृतिः—धैर्य । सहायभूतं - सहायक बनाकर । ध्वाङ्क्षः—कौआ । सपादलक्षं-सवा लाख। जर्जरीकृत्य—चकनाचूर करके । मोचयित्वा—उतार कर । पान्थः—यात्री । पुरा—पहले । अनृतं-झूठा । प्रत्यंग - प्रत्येक अंग । ८६. बालः—मूर्ख । अब्दं-बर्ष । गतासुः-मरा हुआ । दिवाकरः-सूर्य । ६०. शष्पभुक्-घास खाने वाला । उपपन्नं-उचित । पातकं-पाप । घृणी-दयालु । सर्वभक्षी-सब कुछ खा जाने वाला । अत्रपा—निर्लज्ज । प्रेष्यः-नौकर । प्रतीपः-प्रतिकूल । अधिकृतः-अधिकारी । तार्क्ष्यः-गरुड । प्रज्ञावादः-बुद्धिमता की बात ।

क० श्लोक—२७६, २८०, २८२, २८३, २८५–२८७ ।

इति शम्



ओ३म्

# प्रथमभागस्य

## कथा सूची

मित्रभेदः

## शब्दार्थ संग्रह



———०———

# :मित्रसंप्राप्ति

अथेदमारभ्यते मित्रसंप्राप्तिर्नाम द्वितीयं तन्त्रम्। यस्यायमाद्यः श्लोकः—

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् ॥ १ ॥

तद्यथानुश्रूयते—'अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्तफलः कीटैरावृतकोटरः छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो महान्। अथवा युक्तम्।

छायासुप्तमृगः, शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः
कीटैरावृतकोटरः, कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर्निपीतकुसुमः, श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्घसुखदो,[1] भूभारभूतोऽपरः ॥ २ ॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित् प्राणयात्रार्थं पुरमुद्दिश्य प्रचलितो यावत् पश्यति, तावज्जालहस्तोऽतिकृष्णतनुः स्फुटितचरण ऊर्ध्वकेशो यमकिंकराकारो नरः संमुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्—'यदयं दुरात्माऽद्य ममाश्रयवटपादपसंमुखोऽभ्येति। तन्न ज्ञायते किमद्य वटवासिनां विहङ्गमानां संक्षयो भविष्यति न वा।' एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान् प्रोवाच—

---

१. बहूनां सत्त्वानां-प्राणिनां संघाय समूहाय सुखदः।

'भो, अयं दुरात्मा लुब्धो जालतण्डुलहस्तः[१] समभ्येति । तत्सर्वथा तस्य न विश्वसनीयम् । एष जालं प्रसार्य तण्डुलान् प्रक्षेप्स्यति । ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः । एवं वदतस्तस्य स लुब्धकस्तत्र वटतल आगत्य जालं प्रसार्य सिन्दुवारसदृशान् तण्डुलान् प्रक्षिप्य[२] नातिदूरं गत्वा निभृतः स्थितः । अथ ये पक्षिणस्तत्र स्थिताः ते लघुपतनकवाक्यार्गलया[३] निवारिताः तान् तण्डुलान् हालाहलाङ्कुरानिव वीक्षमाणा निभृतास्तस्थुः । अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमन् तांस्तण्डुलान् दूरतोऽपि पश्यन् लघुपतनकेन निवार्यमाणोऽपि जिह्वालौल्याद्भक्षणार्थमपतत् । सपरिवारो निबद्धश्च । अथवा दैवप्रतिकूलतया भवत्येवम् । न तस्य दोषोऽस्ति । उक्तं च

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ३ ॥

अत्रान्तरे लुब्धकस्तान् बद्धान्विज्ञाय प्रहृष्टमनाः प्रोद्यतयष्टिः[४] तद्वधार्थं प्रधावितः । चित्रग्रीवोऽपि आत्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतानूचे—'अहो, न भेतव्यम् । उक्तं च—

---

१. जालतण्डुलौ हस्तयोः यस्य स ।

२. सिन्दुवारःनिर्गुण्डी । संभालू इति भाषायाम् । तद्वत् ईषद्रक्तान् इत्यर्थः ।

३. लघुपतनकस्य वाक्यमेव अर्गला—प्रतिरोधदण्डः तया, निषेधवचनेन इत्यर्थः ।

४. प्रोद्यता उत्तोलिता यष्टिः येन स ।

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ४ ॥
संपत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा ॥ ५ ॥

तत्सर्वे वयं हेलयोड्डीय सपाशजाला अस्यादर्शनं गत्वा मुक्तिं प्राप्नुमः। नो चेद् भयविक्लवाः सन्तो हेलया समुत्पातं न करिष्यथ ततो मृत्युमवाप्स्यथ।

तथानुष्ठिते लुब्धको जालमादायाकाशे गच्छतां तेषां पृष्ठतो भूमिस्थोऽपि पर्यधावत्। तत ऊर्ध्वाननः श्लोकमेनमपठत्—

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः ॥ ६ ॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात्तत्पृष्ठतोऽनुसरति। अथ दृष्टेरगोचरतां गतान्विज्ञाय लुब्धको निराशः श्लोकमपठत् निवृत्तश्च।

'नहि भवति यन्न भाव्य, भवति च भाव्यं विनाऽपि यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ ७ ॥

तदास्तां तावद्विहङ्गामिषलोभो, यावत्कुटुम्बवर्तनोपायभूतं जालमपि मे नष्टम्। चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच—'भोः निवृत्तः स दुरात्मा लुब्धकः। तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य पूर्वोत्तरदिग्भागे। तत्र मम सुहृद् हिरण्यको नाम मूषकः सर्वेषां पाशच्छेदं करिष्यति।

एवं ते कपोताश्चित्रग्रीवेण संबोधिता महिलारोप्ये नगरे हिरण्यकबिलदुर्गं प्रापुः। हिरण्यकोऽपि सहस्रमुखबिलदुर्गं प्रविष्टः सन्

अकुतोभयः सुखेनास्ते । अथवा साध्विदमुच्यते—

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ ८ ॥

न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
तत्कर्म सिद्ध्यते राज्ञां दुर्गेणैकेन यद्रणे ॥ ९ ॥

शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः ।
तस्माद् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥१०॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच—'भो भो मित्र हिरण्यक, सत्वरमागच्छ । महती मे व्यसनावस्था वर्तते' । तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन् प्रोवाच—'भोः, को भवान् । किमर्थमायातः । किं कारणम् । कीदृशी ते व्यसनावस्था[१] । तत्कथ्यताम्' इति । तच्छ्रुत्वा चित्रग्रीव आह—'भोः, चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत् । तत्सत्वरमागच्छ । गुरुतरं प्रयोजनमस्ति ।' तदाकर्ण्य पुलकिततनुः प्रहृष्टात्मा त्वरमाणो निष्क्रान्तः । अथवा साध्विदमुच्यते—

सुहृदः स्नेहसंपन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यमागच्छन्ति महात्मनाम् ॥ ११ ॥

आदित्यस्योदयं तात ताम्बूलं भारती कथा ।[२]
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने ॥ १२ ॥

सुहृदो भवने यस्य समागच्छन्ति नित्यशः ।
चिते च तस्य सौख्यस्य न किंचित्प्रतिमं सुखम् ॥१३॥

१. व्यसनावस्था-कष्टस्थितिः ।
२. भारती-महाभारतसम्बन्धिनी ।

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषाद-मिदमाह–'भोः, किमेतत्'। स आह–'भोः, जानन्नपि किं पृच्छसि। उक्तं च। यतः —

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ १४ ॥

तत्प्राप्तं मयैतद्बन्धनं जिह्वालौल्यात्। सांप्रतं त्वं सत्वरं पाशविमोक्षं कुरु। तदाकर्ण्य हिरण्यकः प्राह—

'अर्धार्धाद्योजनशतादामिषं वीक्षते खगः।[१]
सोऽपि पार्श्वस्थितं दैवाद्बन्धनं न च पश्यति ॥१५॥

तथा च।

रविनिशाकरयोर्ग्रहपीडनं
गजभुजङ्गविहङ्गमबन्धनम्।
मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ १६ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतं स तमाह—'भद्र, मा मैवं कुरु। प्रथमं मम भृत्यानां पाशच्छेदं कुरु। तदनु ममापि च।' तच्छ्रुत्वा कुपितो हिरण्यकः प्राह—'भो, न युक्तमुक्तं भवता। यतः स्वामिनोऽनन्तरं भृत्याः।' स आह—'भद्र, मा मैवं वद। मदाश्रयाः सर्व एते वराकाः। अपरं स्वकुटुम्बं परित्यज्य समागताः

---

१. अर्धार्धात्—पादमितात् योजन-शतात्—पञ्चविंशतियोजनेभ्य इति भावः।

तत्कथमेतावन्मात्रमपि संमानं न करोमि । उक्तं च—

यः संमानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ १७ ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति । अथवा दुरात्मा लुब्धकः समभ्येति तन्नूनं मम नरकपात एव । उक्तं च—

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यात्, नरकं याति परत्रेह च सीदति' ॥ १८ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह—'भोः, वेद्मि अहं राजधर्मम् । परं मया तव परीक्षा कृता । तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि । भवानप्यनेन विधिना बहुकपोतपरिवारो भविष्यति ।' एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह—'मित्र, गम्यतामधुना स्वाश्रयं प्रति । भूयोऽपि व्यसने प्राप्ते समागन्तव्यम् ।' इति तान्संप्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत् । अथवा साध्विदमुच्यते—

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥ १९ ॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत्—'अहो, बुद्धिरस्य हिरण्यकस्य शक्तिश्च दुर्गसामग्री च । तदीदृगेव विधिर्विहङ्गानां बन्धनमोक्षात्मकः । अहं च न कस्यचिद्विश्वसिमि चलप्रकृतिश्च । तथाऽप्येनं मित्रं करोमि । उक्तं च—

अपि संपूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते' ॥ २० ॥

एवं संधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्—'एह्येहि भो हिरण्यक, एहि।' तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्—'किमन्योऽपि कश्चित्कपोतो बन्धनशेषस्तिष्ठति येन मां व्याहरति।' आह च—'भोः, को भवानिति।' स आह—'अहं लघुपतनको नाम वायसः।' तच्छ्रुत्वा विशेषादन्तर्लीनो हिरण्यक आह—'भो, द्रुतं गम्यतामस्मात्स्थानात्।' वायस आह—'अहं तव पार्श्वे गुरुकार्येण समागतः। तत्किं न क्रियते मया सह दर्शनम्।' हिरण्यक आह—'न मेऽस्ति त्वया सह संगमेन प्रयोजनम्' इति। स आह 'भो, चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम्। तेन मम महती प्रीतिः संजाता। तत्कदाचिद्बन्धने जाते तव पार्श्वान्मुक्तिर्भविष्यति। तत्क्रियतां मया सह मैत्री।' हिरण्यक आह—'अहो' त्वं भोक्ता। अहं ते भोज्यभूतः। तत्का त्वया सह मम मैत्री। तद्गम्यताम्। मैत्री विरोधभावात्कथम्। उक्तं च—

यथोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ २१॥

तथा च

यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः।
हीनं वाप्यधिकं वाऽपिह हास्यतां यात्यसौ जनः॥ २२॥

तद्गम्यताम्' इति। वायस आह—'भो हिरण्यक, एषोऽहं तव दुर्गद्वार उपविष्टः। यदि त्वं मैत्रीं न करोषि ततोऽहं प्राणमोक्षणं तवाग्रे करिष्यामि, अथवा प्रायोपवेशनं मे स्यात्' इति। हिरण्यक आह—'भोः' त्वया वैरिणा सह कथं मैत्रीं करोमि। उक्तं च—

'वैरिणा न हि संदध्यात्सुश्लिष्टेनापि संधिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम्' ॥ २३ ॥

वायस आह—'भोः, त्वया सह दर्शनमपि नास्ति । कुतो वैरम् । तत्किमनुचितं वदसि' । हिरण्यक आह—'द्विविधं वैरं भवति । सहजं कृत्रिमं च । तत्सहजवैरी त्वमस्माकम्' । वायस आह—'भोः, अकारणमेतत् । श्रूयतां मे वचनम् ।

कारणान्मित्रतां याति कारणादेति शत्रुताम् ।
तस्मान्मित्रत्वमेवात्र योज्य वैरं न धीमता ॥ २४ ॥

तस्मात्कुरु मया सह समागमं मित्रधर्मार्थम्' । हिरण्यक आह—गुणवानहम्, न मे कश्चिद्वैरयातनां करिष्यति, एतत् न संभाव्यम् । उक्तं च—

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिने-
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः' ॥ २५ ॥

वायस आह—'अस्त्येतत् । तथापि श्रूयताम्—

उपकाराच्च लोकानां, निमित्तान्मृगपक्षिणाम् ।
भयाल्लोभाच्च मूर्खाणां, मैत्री स्य दर्शनात्सताम् ॥ २६ ॥
मृद्घट इव सुखभेद्यो दुःसंधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसंधिश्च ॥ २७ ॥
इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत् सज्जनमैत्री विपरीतानां तु विपरीता ॥ २८ ॥

तत्साधुरहम् । अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि ।' स

आह—'न मेऽस्ति ते शपथैः प्रत्ययः । उक्तं च—

शपथैः संधितस्यापि न विश्वासं व्रजेद्रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण नाशितः ॥ २९ ॥

अन्यच्च ।

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ३० ॥

तथा च—

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वसाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ३१ ॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास—'अहो, बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवा अत एव अस्योपरि मैत्रीपक्षपातः !' स आह—'भो हिरण्यक, दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो गुणदोषसुभाषितगोष्ठीकथाः सर्वदा कर्तव्याः, यद्येवं न विश्वसिषि ।' तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्—'विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च । तद् युक्तमनेन मैत्रीकरणम् । आह च परं कदाचिन्मम दुर्गे चरणपातोऽपि न कार्यः ।

तच्छ्रुत्वा वायस आह—'भद्र, एवं भवतु ।' ततःप्रभृति द्वौ तावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि मांसशकलानि वात्सल्याहृतानि पक्वान्नविशेषाणि च हिरण्यकार्थमानयति । हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषान् लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्य अर्पयति । अथवा युज्यते द्वयोरप्येतत् । उक्तं च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ३२ ॥

नोपकारं विना प्रीतिः कथचित्कस्यचिद् भवेत् ।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ३३ ॥
तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ३४ ॥

पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ३५ ॥

किं बहुना । द्वावपि तौ परममित्रतां गतौ ।

एव स मूषकः तदुपकाररञ्जितः तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टः तेन सह सर्वदैव गोष्ठीं करोति । अथ अन्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच--'भद्र हिरण्यक, विरक्तिः जाता मे सांप्रतं देशस्यास्योपरि । तदन्यत्र यास्यामि ।'

हिरण्यक आह--'भद्र, किं विरक्तेः कारणम् ।' स आह--'भद्र, श्रूयताम् । अत्र देशे महत्यनावृष्ट्या दुर्भिक्षं संजातम् । दुर्भिक्षत्वाज्जनो बुभुक्षापीड़ितः सन् बलिमात्रमपि न प्रयच्छति । अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय पाशाः प्रगुणीकृताः सन्ति । अहमपि आयुःशेषतया पाशेन बद्ध उद्धरितोऽस्मि । एतद्विरक्तेः कारणम् । तेनाहं विदेशं चलित इति वाष्पमोक्षं करोमि ।' हिरण्यक आह--'अथ भवान् क्व प्रस्थितः ।' स आह--'अस्ति दक्षिणापथे वनगहनमध्ये महासरः । तत्र त्वत्तोऽधिकः परमसुहृत् कूर्मो मन्थरको नाम । स च मे मत्स्यमांसखण्डानि दास्यति । तद्भक्षणात्

तेन सह सुभाषितगोष्ठीसुखमनुभवन् सुखेन कालं नेष्यामि। नाहमत्र विहङ्गानां पाशबन्धनेन वधं द्रष्टुमिच्छामि। उक्तं च—

अनावृष्टिहते देशे शस्ये च प्रलयं गते।
धन्यास्तात न पश्यन्ति देशभङ्गं कुलक्षयम्॥ ३६॥
कोऽतिभारः समर्थानां, किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां, कः परः प्रियवादिनाम्॥ ३७॥
विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा, विद्वान्सर्वत्र पूज्यते॥ ३८॥

हिरण्यक आह—'यद्येव तदहमपि त्वया सह गमिष्यामि। ममापि महद्दुःखं वर्तते'। वायस आह—'भोः, तव किं दुःखम्। तत्कथय।' हिरण्यक आह—'भोः, बहु वक्तव्यमस्ति अत्र विषये। तत्रैव गत्वा सर्वं सविस्तरं कथयिष्यामि।' वायस आह—'अहं तावदाकाशगतिः[1]। तत्कथं भवतो मया सह गमनम्।' स आह—'यदि मे प्राणान्रक्षसि तदा स्वपृष्ठमारोप्य मां तत्र प्रापयिष्यसि। नान्यथा मम गतिरस्ति।' तच्छ्रुत्वा सानन्दं वायस आह—'यद्येवं तद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि। अहं संपातादिकान् अष्टावुड्डीनगतिविशेषान् वेद्मि। तत्समारोह मम पृष्ठम्, येन सुखेन त्वां तत्सरः प्रापयामि।'

तच्छ्रुत्वा हिरण्यकः तत्क्षणादेव तदुपरि समारूढः। सोऽपि शनैः शनैः तमादाय क्रमेण तत्सरः प्राप्तः। ततो लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि देशकालविद् असामान्यकाकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः। लघुपतनकोऽपि

१. आकाशगतिः—आकाशे गतिः यस्य स।

तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच—'भोः मन्थरक, आगच्छागच्छ। तव मित्रमहं लघुपतनको नाम वायसश्चिरात् सोत्कण्ठः समायातः। तदागत्य आलिङ्गय माम्। उक्तं च—

केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम्।
आपदां च परित्राणं शोकसंतापभेषजम्' ॥ ३९ ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुः आनन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच—'एह्येहि मित्र, आलिङ्गय माम्। चिरकालान्मया त्वं न सम्यक् परिज्ञातः। तेनाहं सलिलान्तः प्रविष्टः। उक्तं च—

यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम्।
न तेन सगतिं कुर्यादित्युवाच बृहस्पतिः' ॥ ४० ॥

एवमुक्ते लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान्। अथवा साध्विदमुच्यते—

अमृतस्य प्रवाहैः किं कायक्षालनसंभवैः।[१]
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ४१ ॥

एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुः आत्मचरित्रवृत्तान्तम्। हिरण्यकोऽपि मन्थरकस्य प्रणामं कृत्वा वायसाभ्याशे समुपविष्टः। अथ तं समालोक्य मन्थरको लघुपतनकमाह—'भोः, कोऽयं मूषकः। कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्य आनीतः। तन्नात्र स्वल्पकारणेन भाव्यम्।' तच्छ्रुत्वा

१. कायक्षालन—शरीरस्नान संभवति जायते यैः तैः शरीरशुद्धिकारकैरित्यर्थः।

लघुपतनक आह--'भोः, हिरण्यको नाम मूषकोऽयम् मम सुहृद्, द्वितीयमिव जीवितम्। परं निर्वेदमापन्नः संप्राप्तोऽयं तवान्तिकम्।

मन्थरक आह—'किमस्य वैराग्यकारणम्।' वायस आह--'पृष्टो मया। परमनेनाभिहितम्, यद् बहु वक्तव्यमस्ति। तत्तत्रैव गतः कथयिष्यामि। ममापि न निवेदितम्। तद्भद्र हिरण्यक, इदानीं निवेद्यतां उभयोरप्यावयो तद् आत्मनो वैराग्यकारणम्।' सोऽब्रवीत्—

## १. हिरण्यकताम्रचूड कथा।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरे मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूडो नाम परिव्राजकः प्रतिवसति स्म। स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्मकराणां दत्त्वा सम्यक् तत्रैव देवतायतने संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति।

अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम्—'स्वामिन्, मठायतने सिद्धमन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव। तद्वय भक्षयितुं न शक्नुमः। स्वामिनः पुनरगम्य किमपि नास्ति। तत्किं वृथाटनेनान्यत्र। अद्य तत्र गत्वा यथेच्छं भुञ्जामहे तव प्रसादात्।

तदाकर्ण्याहं सकलयूथपरिवृतः तत्क्षणादेव तत्र गतः। उत्पत्य च तस्मिन्भिक्षापात्रे समारूढः। तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात् स्वयमेव भक्षयामि। सर्वेषां तृप्तौ जातायां भूयः स्वगृहं

गच्छामि । एवं नित्यमेव तदन्नं भक्षयामि । परिव्राजकोऽपि यथाशक्ति रक्षति । परं यदैव निद्रान्तरितो[१] भवति, तदाहं तत्रारुह्य आत्मकृत्यं करोमि । अथ कदाचित्तेन मम रक्षणार्थं महान् यत्नः कृतः । जर्जरवंशः समानीतः । तेन सुप्तोऽपि मम भयाद् भिक्षापात्रं ताडयति । अहमपि अभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि । एवं तेन सह सकलां रात्रिं विग्रहपरस्य कालो व्रजति ।

अथ अन्यस्मिन्नहनि तस्य मठे बृहत्स्फिङ्नामा परिव्राजकस्तस्य सुहृत् तीर्थयात्राप्रसङ्गेन पान्थः प्राघुणिकः[२] समायातः । तं दृष्ट्वा प्रत्युत्थानविधिना सभाव्य प्रतिपत्तिपूर्वकमभ्यागतक्रियया नियोजितः[३] । ततश्च रात्रावेकत्र कुशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ ।

अथ बृहत्स्फिक्कथागोष्ठीसु स ताम्रचूडो मूषकत्रासार्थं व्याक्षिप्तमना[४] जर्जरवंशेन भिक्षापात्रं ताडयन् तस्य शून्यं प्रतिवचनं प्रयच्छति । तन्मयो न किंचिदुदाहरति । अथासौ अभ्यागतः परं कोपमुपागतः तमुवाच—'भोः ताम्रचूड, परिज्ञातस्त्वं सम्यङ् न सुहृत् । तेन मया सह साह्लादं न जल्पसि । तद्रात्रावपि त्वदीयं मठं त्यक्त्वाऽन्यत्र मठे यास्यामि । उक्तं च—

---

१. निद्रान्तरितः—निद्रापरिवृतः, गाढनिद्रांगत इत्यर्थः ।

२. प्राघुणिकः—अतिथिः ( पाहुना ) ।

३. प्रत्युत्थानविधिः—आदरणीयं अतिथ्यादिकं प्रति उत्थाय गमनव्यापारः । संभाव्य—सत्कृत्य । प्रतिपत्तिः पूर्वा यस्मिन् तत् यथा स्यात् तथा सादरमित्यर्थः । अभ्यागतक्रियया नियोजितवान्-अभ्यागतः-अतिथिः तत्सत्कारोचितभोजनादिकर्मणा सन्तर्पितवान् ।

४. व्याक्षिप्तं विषयान्तरगतं मनो यस्य सः ।

एह्यागच्छ समाश्रयासनमिदं, कस्माच्चिराद् दृश्यसे
का वार्ता ह्यतिदुर्बलोऽसि, कुशलं ? प्रीतोऽस्मि ते दर्शनात् ।
एवं ये समुपागतान्प्रणयिनः प्रह्लादयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ४२ ॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाऽप्यधः ।
तत्र ये सदने यान्ति, ते शृङ्गरहिता वृषाः ॥ ४३ ॥

नाभ्युत्थानक्रिया यत्र, नालापा मधुराक्षराः ।
गुणदोषकथा नैव, तत्र हर्म्ये न गम्यते ॥ ४४ ॥

तदेकमठप्राप्त्यापि त्वं गर्वितः । त्यक्तः सुहृत्स्नेहः । नैतद्वेत्सि यत्त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम् । उक्तं च—

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर[1] ।
वर्षं यावत् किमन्येन मठचिन्तां दिनत्रयम् ॥ ४५ ॥

तन्मूर्ख, शोचितव्यस्त्वं गर्वं गतः । तदहं त्वदीयं मठं परित्यज्य यास्यामि ।' अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडः तमुवाच— 'भो भगवन्, मैवं वद । न त्वत्समोऽन्यो मम सुहृत्कश्चिदस्ति । परं तच्छ्रूयतां गोष्ठीशैथिल्यकारणम् । एष दुरात्मा मूषकः प्रोन्नत-स्थाने धृतमपि भिक्षापात्रं उत्प्लुत्यारोहति, भिक्षाशेषं च तत्रस्थं भक्षयति । तद्भावादेव मठे मार्जनक्रियाऽपि न भवति । तन्मूषक-त्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुस्ताडयामि, नान्यत्कारणमिति । अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो, यन्मार्जारमर्कटादयोऽपि तिर-

1. पौरोहित्यम्—पुरोहितस्य कर्म । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक् । कित्वात् वृद्धिश्च ।

स्वकृता अस्योत्थतनेन ।' बृहत्स्फिगाह—'अथ[1] ज्ञायते तस्य बिलं कस्मिश्चित्प्रदेशे ।' ताम्रचूड आह—'भगवन्' न वेद्मि सम्यक्' । स आह—नूनं निधानस्योपरि तस्य बिलम् । निधानोष्मणा प्रकूर्दते । तथा च—

नाकस्माच्छाण्डिली[2] मातः विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन, हेतुरत्र भविष्यति' ॥ ४७ ॥

ताम्रचूड आह—'कथमेतत् ।' स आह—

## २. शाण्डिली तिलकल्क विक्रय कथा ।

एकदाऽहं कस्मिंश्चित्स्थाने प्रावृट्काले व्रतग्रहणनिमित्तं कंचिद् ब्राह्मणं वासार्थं प्रार्थितवान् । ततश्च तद्वचनात्तेनापि शुश्रूषितः सुखेन देवार्चनपरस्तिष्ठामि । अथान्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणीसंवादे दत्तावधानः शृणोमि । तत्र ब्राह्मण आह—'ब्राह्मणि, प्रभाते दक्षिणायनसंक्रान्तिर[3]नन्तदानफलदा भविष्यति । तदहं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि । त्वया ब्राह्मणस्यैकस्य भगवतः सूर्यस्योद्देशेन किंचिद्भोजनं दातव्यम् । इति । अथ तच्छ्रुत्वा ब्राह्मणी

१. अथ शब्दः प्रश्ने ।

२. हे मातःशाण्डिलस्य गोत्रापत्यं स्त्री शाण्डिली । शाण्डिल्यगोत्रोत्पन्ना इत्यर्थः । लुञ्चितान्-कुट्टितान् । तिलान् इतरैः तद्भिन्नैः अकुट्टितैः तिलैः अकस्मात् विना हेतुं न विक्रीणाति । यः कश्चित् हेतुश्च अवश्यं भविष्यति ॥

३. दक्षिणायन संक्रान्तिः—भगवान् सूर्यः यत् शीतर्तौ दक्षिणां दिशमाश्रित्य प्रवर्तते तत् दक्षिणायनं, तस्मिन् संक्रान्तिः संक्रमणम् । कर्क संक्रान्तिरित्यर्थः ।

परुषतरवचनैस्तं भर्त्सयमाना प्राह—'कुतस्ते दारिद्र्योपहतस्य भोजनप्राप्तिः। तत्किं न लज्जसे एवं ब्रुवाणः। अपि च न मया तव हस्तलग्नया क्वचिदपि लब्धं सुखम्। न मिष्टान्नस्यास्वादनम्, न च हस्तपादकण्ठादिभूषणम्'। तच्छ्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह—'ब्राह्मणि, नैतद्युज्यते वक्तुम्। उक्तं च—

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥ ४८॥

ईश्वरा भूरिदानेन यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या[1]प्राप्नुयादिति नः श्रुतिः॥ ४९॥

दाता लघुरपि सेव्यो भवति, न कृपणो महानपि समृद्ध्या।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य, न समुद्रः॥ ५०॥

अपि च।

सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी॥ ५१॥

यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य।
नित्यं प्रसारितकरो मित्रोऽपि[2] न वीक्षितुं शक्यः॥ ५२॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम्। उक्तं च—

सत्पात्रं महती श्रद्धा देशे काले यथोचिते।
यद्दीयते विवेकज्ञैस्तदानन्त्याय कल्पते[3]॥ ५३॥

---

१. काकिणी—कपर्दिका (कौड़ी)।

२. प्रसारिताः कराः रश्मयो हस्ताश्च येन स। मित्रः—सूर्यः।

३. आनन्त्याय कल्पते-अमृतत्व-प्राप्तये समर्थो भवति, अमृतत्वं जनयति इत्यर्थः।

तथा च—

अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत् ।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ५४ ॥

ब्राह्मण्याह—'कथमेतत् ?' स आह—

## ३. पुलिन्द शूकरादि कथा ।

अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित् पुलिन्दः । स च पापर्द्धिं[1] कर्तुं वनं प्रति प्रस्थितः ! अथ तेन प्रसर्पता महान् अञ्जनपर्वतशिखराकारः क्रोडः समासादितः । तं दृष्ट्वा कर्णान्ताकृष्टनिशितसायकेन समाहतः । तेनापि कोपाविष्टेन चेतसा दंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर्भूतलेऽपतत् । अथ लुब्धकं व्यापाद्य शूकरोऽपि शरप्रहारवेदनया पञ्चत्वं गतः ।

एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया पीडितः परिभ्रमन् तं प्रदेशमाजगाम । यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत्प्रहृष्टो व्यचिन्तयत्—'भोः, सानुकूलो मे विधिः । तेन एतदप्यचिन्तितं भोजनमुपस्थितम् । अथवा साध्विदमुच्यते—

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम् ।
शुभाशुभं समभ्येति विधिना संनियोजितम् ॥ ५५ ॥

तथा च ।

यस्मिन्देशे च काले च वयसा यादृशेन च ।
कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ॥ ५६ ॥

तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति ।

---

१. पापर्द्धिः—मृगया । क्रोडः—शूकरः ।

तत्तावदेनं स्नायुपाशं[1] धनुष्कोटिगतं भक्षयामि। उक्तं च—

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम्।
रसायनमिव प्राज्ञैर्हेलया न कदाचन' ॥ ५७ ॥

इत्येवं मनसा निश्चित्य चापघटित[2] कोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षयितुं प्रवृत्तः। ततश्च त्रुटिते पाशे तालुदेशं विदार्य चापकोटिर्मस्तकमध्येन निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणान्मृतः। अतोऽहं ब्रवीमि—'अति तृष्णा न कर्तव्या' इति॥

स पुनरप्याह—'ब्राह्मणि, न श्रुतं भवत्या।

आयुः कर्म च वित्तं च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः' ॥ ५८ ॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह—'यद्येवं तदस्ति मे गृहे स्तोकस्तिलराशिः। ततस्तिलांल्लुञ्चित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामि' इति। ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः।

सापि तिलानुष्णोदकेन समर्द्य लुञ्चित्वा सूर्यातपे दत्तवती। अत्रान्तरे तस्या गृहकर्मव्यग्रायास्तिलानां मध्ये कश्चित्सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तितवती—'अहो, नैपुण्यं पश्य पराङ्मुखीभूतस्य विधेः, यदेते तिला अभोज्याः कृताः। तदहमेतान्समादाय कस्यचिद्गृहं गत्वा लुञ्चितैरलुञ्चितानानयामि। सर्वोऽपि जनोऽनेन विधिना प्रदास्यति' इति।

अथ यस्मिन्गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलानादाय प्रविष्टा विक्रयं कर्तुम्। आह च गृह्णातु कश्चिदलुञ्चितैर्लु-

---

१. स्नायुपाशं—स्नायुनिर्मितां धनुषो मौर्वीम्।

२. चापघटितां—कोदण्ड संलग्नां।

ञ्चितांस्तिलान्। अथ तद्गृहगृहिणी प्रविष्टा यावदलुञ्चितैः लुञ्चितान्गृह्णाति, तावदस्याः पुत्रेण कामन्दकीशास्त्रं[1] दृष्ट्वा व्याहृतम्--'मातः, अग्राह्याः खल्विमे तिलाः। नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः। कारणं किंचिद्भविष्यति, येनैषाऽलुञ्चितैर्लुञ्चितान्प्रयच्छति।' तच्छ्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि--'नाकस्माच्छाण्डिली मातः' इति॥

एतदुक्त्वा स भूयोऽपि प्राह--'अथ ज्ञायते तस्य क्रमणमार्गः।'[2] ताम्रचूड आह--'भगवन्, ज्ञायते। यत एकाकी न समागच्छति। किंत्वसंख्ययूथपरिवृतः पश्यतो मे परिभ्रमन्नितस्ततः सर्वजनेन सहागच्छति याति च।' अभ्यागत आह--'अस्ति किंचित्खनित्रकम्।' स आह--'बाढमस्ति। एषा सर्वलोहमयी स्वहस्तिका।'[3] अभ्यागत आह--'तर्हि प्रत्यूषे त्वया मया सह स्थातव्यम्, येन द्वावपि जनचरणमलिनायां भूमौ तत्पदानुसारेण गच्छावः।'

मयापि तद्वचनमाकर्ण्य चिन्तितम्--'अहो, विनष्टोऽस्मि, यतोऽस्य साभिप्रायवचांसि श्रूयन्ते। नूनं यथा निधानं ज्ञातं तथा दुर्गमप्यस्माकं ज्ञास्यति। एतदभिप्रायादेव ज्ञायते।

उक्तं च--

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि[4] निपुणाः पलप्रमाणं विजानन्ति॥ ५९॥

---

१. कामन्दकी शास्त्रं— नीतिशास्त्रविशेषः।

२. क्रमणमार्गः—यातायातमार्गः।

३. स्वहस्तिका—खनित्रकम् ('कुदाल', फावड़ा)।

४. हस्ततुलया—हस्तरूपया तुलया।

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्यान्यमार्गेण गन्तुं प्रवृत्तः। सपरिजनो यावदग्रतो गच्छामि तावत्संमुखो बृहत्कायो मार्जारः समायाति। स च मूषकवृन्दमवलोक्य तन्मध्ये सहसोत्पपात। अथ ते मूषका मां कुमार्गगामिनमवलोक्य गर्हयन्तो हतशेषा रुधिरप्लावितवसुंधराः तमेव दुर्गं प्रविष्टाः। अथवा साध्विदमुच्यते –

छित्त्वा पाशमपास्य कूटरचनां, भङ्क्त्वा बलाद् वागुरां,
पर्यन्ताग्निशिखाकलापजटिलात् निर्गत्य दूरं वनात्।[1]
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तः पतितः, करोतु विधुरे किंवा विधौ पौरुषम् ॥ ६० ॥

अथाहमेकोऽन्यत्र गतः। शेषा मूढतया तत्रैव दुर्गे प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः। ततश्च स्वहस्तिकया खनितुमारब्धः। अथ तेन खनता प्राप्तं तन्निधानं, यस्योपरि सदैवाहं कृतवसतिर्यस्योष्मणा महादुर्गमपि गच्छामि।

ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः—'भो भगवन्, इदानीं स्वपिहि निःशङ्कः। अस्योष्मणा मूषकस्ते जागरणं करोति।' एवमुक्त्वा निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि। अहमपि यावन्निधानरहितं स्थानमागच्छामि, तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि। अचिन्तयच्च—'किं करोमि।

१. पर्यन्तेषु प्रान्तेषु अग्निशिखाकलापैः अग्निज्वालासमूहैः जटिलात् व्याप्तात्।

२. कृतवसतिः—कृता वसतिः निवासः येन स, निवसन्नित्यर्थः।

क गच्छामि । कथं मे स्यान्मनसः प्रशान्तिः ।' एवं चिन्तयतो मम महाकष्टेन स दिवसो व्यतिक्रान्तः । अथास्तमितेऽर्के सोद्वेगो निरुत्साहः तस्मिन्मठे सपरिवारः प्रविष्टः ।

अथ अस्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः । अथासौ अभ्यागतः प्राह—'सखे, किमद्यापि निःशङ्को न निद्रां गच्छसि ।' स आह—'भगवन्, भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः । तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि ।' ततो विहस्याभ्यागतः प्राह— सखे, मा भैषीः । वित्तेन सह गतोऽस्य कूर्दनोत्साहः । सर्वेषामपि जन्तूनामियमेव स्थितिः । उक्तं च--

यदुत्साही सदा मर्त्यः, पराभवति यज्जनान् ।
यदुद्धतं वदेद्वाक्यं, तत्सर्वं वित्तजं बलम् ॥ ६१ ॥

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः । तच्छ्रुत्वाऽसौ मे शत्रुर्विहस्य ताम्रचूडमुवाच—'भोः, पश्य पश्य कौतूहलम् । आह च—

'अर्थेन बलवान्सर्वोऽप्यर्थयुक्तः स पण्डितः ।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ६२ ॥

तत्स्वपिहि त्वं गतशङ्कः । यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम् । अथवा साध्विदमुच्यते--

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः' ॥ ६३ ॥

तच्छ्रुत्वाऽहं मनसा विचिन्तितवान्—'यतोऽङ्गुलिमात्रमपि कूर्दनशक्तिर्नास्ति, तद्धिगर्थहीनस्य पुरुषस्य जीवितम् । उक्तं च--

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्वा, ग्रीष्मे कुसरितो यथा ॥ ६४ ॥
यथा काकयवाः[1] प्रोक्ता, यथारण्यभवास्तिलाः ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ६५ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां, श्रीगुणानां प्रकाशिनी ॥ ६५ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः ।
यथा द्रव्याणि संप्राप्य तैर्विहीनः सुखे स्थितः ॥ ६७ ॥
शुष्कस्य कटीखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म, न चार्थिनः ॥ ६८ ॥

एवं विलप्याहं भग्नोत्साहस्तन्निधानं गण्डोपधानीकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः । ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति—अहो, असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य पृष्ठलग्नानां विडालादिविपत्तयः । तत्किमनेनाराधितेन । उक्तं च—

यत्सकाशान्न लाभः स्यात् केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो, विशेषादनुजीविभिः' ॥ ६० ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम् । यावन्नो कश्चिन्मम संमुखेऽभ्येति तावन्मया चिन्तितम्—'धिगियं दरिद्रता । मृतः दरिद्रः पुरुषः । कोऽर्थ एतेन दारिद्र्यजीवितेन ।'

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः । ते च मामेकाकिनं दृष्ट्वा विडम्बनां[1] कुर्वन्ति । अथ मयैकाकिना योगनिद्रां गतेन

---

१. विडम्बना—उपहासः । योग-निद्रा-कपट निद्रा (आंख बन्द किये पड़े रहना)।

भूयो विचिन्तितम्---'यत्तस्य कुलपस्तिनः समाश्रयं गतः। तद्गण्डोपधानवर्तिकृतां वित्तपेटां[1] शनैः शनैर्विदार्य तस्य निद्रावशंगतस्य स्वदुर्गं तद्वित्तमानयामि, येन भूयोऽपि मे वित्तप्रभावेणाधिपत्यं पूर्ववद्भविष्यति। उक्तं च--

दौर्गत्यं देहिनां दुःखमपमानकरं परम्।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ ७० ॥

दैन्यस्य पात्रतामेति, पराभूतेः परं पदम्।
विपदामाश्रयः शश्वद् दौर्गत्यकलुषीकृतः ॥ ७१ ॥

लज्जन्ते बान्धवास्तेन संबन्धं गोपयन्ति च।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ ७२ ॥

शौचावशिष्टयाप्यस्ति किंचित्कार्यं क्वचिन्मृदा।
निर्धनेन जनेनैव न तु किंचित्प्रयोजनम् ॥ ७३ ॥

अधनो दातुकामोऽपि संप्राप्तो धनिनां गृहम्।
मन्यते याचकोऽयं धिग्दारिद्र्यं खलु देहिनाम् ॥ ७४ ॥

अतो वित्तापहारं[2] विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम्।
उक्तं च--

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ७५ ॥

तथा च।

---

१. तद्गण्डोपधान वर्तिकृतां—तस्य मुनेः गण्डोपधानी भूता कपोला श्रयोपबर्हरूपा वर्तते इति तत्कृतां तथाभूतां गण्डस्याधस्तात् उपबर्हत्वेन स्थापितां इत्यर्थः अर्थमञ्जूषाम्।

२. वित्तापहारः—धनहरणं, चौर्यम्।

गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।
प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः[1] ॥७६॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्, तावत्प्रबुद्धो दुष्टतापसः। ततश्च जर्जरवंशप्रहारेण शिरसि ताडितः कथंचिदायुःशेषतया निर्गतोऽहम्, न मृतश्च। उक्तं च—

प्राप्तव्यमर्थं लभते मनुष्यो
दैवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम्' ॥ ७७ ॥

तदेतत्सकलं सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशमानीतः। तदेतन्मे वैराग्यकारणम्।'

मन्थरक आह—'भद्र, भवति सुहृदयमसंदिग्ध यः क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेव पृष्ठमारोप्यानयति, न मार्गेऽपि भक्षयति। उक्तं च यतः—

विकारं याति नो चित्तं वित्ते यस्य कदाचन।[2]
मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम् ॥ ७८ ॥

तथा च—

आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु संप्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥ ७९ ॥

---

१. सनातनाः लोकाः—नित्याः ब्रह्मलोकादयः।

२. वित्ते धने सत्यपि यस्य चित्तं कदाचन विकारं न याति, यश्च सर्वकाले मित्रं, तादृशं उत्तमं मित्रं कारयेत् कुर्यादित्यर्थः।

तन्ममाऽपि अद्यास्य विषये विश्वासः समुत्पन्नो, यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम्। अथवा साध्विद-मुच्यते—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात्कार्याद्वैरी परीक्षितः॥ ८०॥

तत्स्वागतं भवतः। स्वगृहवदास्यतामत्र सरस्तीरे। यच्च वित्तनाशो विदेशवासश्च ते संजातः तत्र विषये संतापो न कर्तव्यः। उक्तं च—

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः।
किंचित्कालोपभोग्यानि यौवनानि धनानि च॥ ८१॥

अत एव विवेकिनो जितात्मानो धनस्पृहां न कुर्वन्ति। उक्तं च—

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान्॥ ८२॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
नाशे दुःखं व्यये दुःखं, धिगर्थान्कष्टसंश्रयान्॥ ८३॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात्॥ ८४॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम्। ततः—

को धीरस्य मनस्विनः स्वविषयः, को वा विदेशः स्मृतो
यं देशं श्रयते, तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः॥ ८४॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान्भवति स कथंचिदपि न

सीदति । उक्तं च—

कोऽतिभारः समर्थानां, किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां, कः परः प्रियवादिनाम् ॥८६॥

तत्प्रज्ञानिधिर्भवान्न प्राकृतपुरुषतुल्यः । अथवा ।

उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं मार्गति वासहेतोः ॥८७॥

अपरं प्राप्तोऽप्यर्थः कर्मप्राप्त्या[1]नश्यति । तदेतावन्ति दिनानि यावत् त्वदीयमासीत् । मुहूर्तमप्यनात्मीयं भोक्तुं न लभ्यते । स्वयमागतमपि विधिनाऽपाहृयते ।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते ।
अरण्यं महदासाद्य मूढः सोमिलको यथा' ॥८८॥

हिरण्यक आह—'कथमेतत् ।' स आह—

## ४. सोमिलक गुप्तधनोपभुक्त धन कथा ।

कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म । स चानेकविधपटरचनारञ्जितानि[2] पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति । परं तस्य चानेकविधपटरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमप्यर्थमात्रं संपद्यते । अथान्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसंपादनविज्ञानिनो महाधनिकाः । तानवलोक्य स स्वभार्या-

१. कर्मप्राप्त्या—पूर्वजन्म कर्मवशात् ।

२. अनेकविधानां—विविधाकृतीनां पटानां वस्त्राणां रचनाभिः निर्माणैः रञ्जितानि—रागवन्ति कृतानि (रंगबिरंगे छपे हुए) ।

माह—'प्रिये, पश्यैतान्स्थूलपटकारकान् धन-कनकसमृद्धान्। तदधारणकं[1] ममैतत्स्थानम्। तदन्यत्रोपार्जनाय गच्छामि।' सा प्राह—'भोः प्रियतम, मिथ्या प्रलपितमेतत् यदन्यत्र गतानां धनं भवति स्वस्थाने न भवतीति। उक्तं च—

न हि भवति यन्न भाव्यं, भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति॥ ८९॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुराकृतं कर्म कर्तारमनुगच्छति॥ ९०॥

शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म तिष्ठेत्तथ सहात्मना॥ ९१॥

यथा छायातपौ नित्यं सुसंबद्धौ परस्परम्।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरम्॥ ९२॥

तस्मादत्रैव व्यवसायपरो भव।' कौलिक आह—'प्रिये, न सम्यगभिहितं भवत्या। व्यवसायं विना कर्म न फलति। उक्तं च—

यथैकेन न हस्तेन तालिका संप्रपद्यते।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम्॥ ९३॥

पश्य कर्मवशात्प्राप्तं भोज्यकालेऽपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथंचन॥ ९४॥

तथा च—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवं हि दैवमिति कापुरुषा वदन्ति।

---

१. अधारणकं—न धारयति इति तत्। एतत् स्थानं मां न धारयति। अननुकूलमित्यर्थः। (यहां मेरा गुजारा सम्भव नहीं)।

दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ ९५ ॥

तथा च--

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥ ९६ ॥

उद्यमेन विना राजन्न सिद्ध्यन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ ९७ ॥

स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः[1] ॥ ९८ ॥

तन्मयाऽवश्यं देशान्तरं गन्तव्यम् ।' इति निश्चित्य वर्धमानपुरं गतः । तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः । अथार्धपथे गच्छतस्तस्य कदाचित् पर्यटतो भगवान् रविरस्तमुपागतः । तदासौ व्यालभयात्स्थूलतरवटस्कन्धमारुह्य यावत्प्रसुप्तः तावन्निशीथे स्वप्ने पुरुषौ रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत् । तत्रैक आह—'भोः, कर्तः, त्वं किं सम्यक् न वेत्सि यदस्य सोमिलकस्य भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति । तत्किं त्वयाऽस्य सुवर्णशतत्रयं प्रदत्तम् ।' स आह—'भोः कर्मन्, मयाऽवश्यं दातव्यं व्यवसायिनाम् । तत्र च तस्य परिणतिर्[2] त्वदायत्ता' इति ।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति ताव-

१. दैवान्तरितपौरुषः—दैवेन अदृष्टेन अन्तरितं तिरोहितं विफलीभूतमित्यर्थः पौरुषं उद्योगो यस्य सः ।

२. परिणतिः—स्थिरीभावः, उपभोगः ( भोग करना ) ।

द्रिक्तं पश्यति । ततः साक्षेपं[१] चिन्तयामास—'अहो, किमेतत् महता कष्टेनोपार्जितं वित्तं हेलया[२] क्वापि गतम् । तद्व्यर्थश्रमोऽकिंचनः कथं स्वपत्न्याः मित्राणां च मुखं दर्शयिष्यामि ।' इति निश्चित्य तदेव पत्तनं गतः । तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः । यावदर्धपथे भूयोऽटवीगतस्य भगवान्भानुरस्तं जगाम । अथ सुवर्णनाशभयात् सुश्रान्तोऽपि न विश्राम्यति । केवलं कृतगृहोत्कण्ठः सत्वरं व्रजति ।

अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ चाशृणोत् । तत्रैकः प्राह —'भोः कर्तः, किं त्वयैतस्य सुवर्णशतपञ्चकं प्रदत्तम् । तत्किं न वेत्सि, यद्भोजनाच्छादनाभ्यधिकमस्य किंचिन्नास्ति ।' स आह—'भोः कर्म्मन्, मयावश्यं देयं व्यवसायिनाम् । तस्य परिणामस्त्वदायत्तः । तत्किं मामुपालम्भयसि ।' तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति ।

ततः परं दुःखमापन्नो व्यचिन्तयत्—'अहो, किं मम धनरहितस्य जीवितेन । तदत्र वटवृक्षे आत्मानमुद्बद्ध्य प्राणांस्त्यजामि ।' एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबद्ध्य यावत्प्रक्षिपति तावदेकः पुमानाकाशस्थ एवेदमाह—'भो भोः सोमिलक, मैवं साहसं कुरु । अहं ते वित्तापहारकः । न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहे । तद्गच्छ स्वगृहं प्रति । अन्यच्च भवदीय साहसेनाहं तुष्टः तथा मे न स्याद् व्यर्थं दर्शनम् । तत्प्रार्थ्यतामभीष्टो वरः कश्चित् ।' सोमिलक आह—'यद्येवं तद्देहि मे प्रभूतं धनम् ।' स आह—'भोः, किं

१. साक्षेपं —आत्मनो निन्दा पूर्वकं ।
२. हेलया—सहसा ।

करिष्यसि भोगरहितेन धनेन, यतस्तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति।

सोमिलक आह--'यद्यपि तस्य धनस्य भोगो नास्ति, तथापि तद्भवतु। उक्तं च—

कृपणोऽप्युकुलीनोऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोके यस्य स्याद्वित्तसंचयः॥ ९९॥

पुरुष आह—'यद्येवं तद्गच्छ भूयोऽपि वर्धमानपुरम्। तत्र द्वौ वणिक्पुत्रौ वसतः। एको गुप्तधनः, द्वितीय उपभुक्तधनः[1]। ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः। यदि ते धनेन प्रयोजनमभक्षितेन ततस्त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमि' इति॥ एवमुक्त्वाऽदर्शनं गतः।

सोमिलकोऽपि विस्मितमना भूयोऽपि वर्धमानपुरं गतः। अथ सन्ध्यासमये श्रान्तः कथमपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन् कृच्छ्राल्लब्ध्वाऽस्तमिते सूर्ये प्रविष्टः। अथासौ भार्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद् गृहं प्रविश्योपविष्टः। ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं[2] किंचिदशनं दत्तम्। ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ पुरुषौ परस्परं मन्त्रयतः। तत्रैक आह--'भोः कर्तः, किं त्वयास्य गुप्तधनस्यान्योऽधिको व्ययो निर्मितो युत्सोमिलकस्यानेन भोजनं दत्तम्। तदयुक्तं त्वया कृतम्।' स आह--'भोः कर्मन्, न ममात्र दोषः।

---

१. गुप्तं सुरक्षितं न तु संवितमित्यर्थः धनं यस्य स कदर्यः। उपभुक्तं धनं येन स।

२. भक्ति वर्जितम्—अनादरेण।

मया पुरुषस्य लाभ गतिर्दातव्या । तत्परिणतिः पुनस्त्वदायत्ता' इति ।

अथासौ यावदुत्तिष्ठति यावद्गुप्तधनो विषूचिकया[1] खिद्यमानो रुजाभिभूतः क्षणं तिष्ठति । ततो द्वितीयेऽह्नि तद्दोषेण कृतोपवासः संजातः । सोमिलकोऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः । तेनापि चाभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसंमानस्तस्यैव गृहे भव्यशय्यामारुह्य सुप्तः । ततश्च निशीथे यावत्पश्यति तावत्तावेव द्वौ पुरुषौ मिथो मन्त्रयतः । अथ तयोरेक आह—'भोः कर्तः, अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः । तत्कथय कथमस्योद्धारको विधिर्भविष्यति । अनेन सर्वमेतद् व्यवहारकगृहात्समानीतम्[2] ।' स आह—'भोः कर्मन्, मम कृत्यमेतत् । परिणतिस्त्वदायत्ता' इति ।

अथ प्रभातसमये राजपुरुषो राजप्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास । तद् दृष्ट्वा सोमिलकश्चिन्तयामास—संचयरहितोऽपि वरमेष उपभुक्तधनः, नासौ कदर्यो गुप्तधनः । तद्विधाता मां दत्तभुक्तफलं करोतु । न कार्यं मे गुप्तधनेन । ततः सोमिलको दत्तभुक्तधनः[3] संजातः । अतोऽहं ब्रवीमि—'अर्थस्योपार्जनं कृत्वा' इति ॥ तद्भद्र हिरण्यक, एवं ज्ञात्वा धनविषये संतापो न कार्यः । अथ विद्यमानमपि धनं भोगवन्ध्यतया तदविद्यमान

---

१—विषूचिका—'हैजा' ।

२—व्यवहारकः—कुसीद जीवी । ( महाजन ) ।

३—दत्तं च भुक्तं च धनं येन सः ।

मन्तव्यम् । उक्तं च---

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १०० ॥

तथा च ।

उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह[१] इवाम्भसाम् ॥ १०१ ॥
दातव्यं भोक्तव्यं धनविषये संचयो न कर्तव्यः ।
पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ १०२ ॥

अन्यच्च ।

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १०३ ॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं[२] वित्तोपार्जनं कर्तव्यम्, यतो दुःखाय तत् । उक्तं च---

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया ।
तप्ता ग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १०४ ॥

सर्पाः पिबन्ति पवनं, न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्यैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १०५ ॥

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥ १०६ ॥

---

१---परीवाहः-जलनिःसारणम् ।
२---स्थित्यर्थं-स्थापनाय ( जमा करने के लिये ) ।

पीयूषमिव संतोषं पिबतां निर्वृत्तिः परा ।
दुःखं निरन्तरं पुंसामसंतोषवतां पुनः ॥ १०७ ॥
अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १०८ ॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १०९ ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
संतोषतुल्यं धनमस्ति नान्यत् ॥ ११० ॥

सकृत्कन्दुकपातेन पतत्यार्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १११ ॥

एवं ज्ञात्वा भद्र, त्वया संतोषः कार्यः' इति । मन्थरकवचनमाकर्ण्य वायस आह—'मन्थरको यदेवं वदति तत्त्वया चित्ते कर्तव्यम् । अथवा साध्विदमुच्यते--

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ११२ ।

अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः' ॥ ११३ ॥

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः । अथायान्तं ससंभ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यको निकटवर्तिनं

शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमास्थितः । अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच—'एह्येहि सखे मन्थरक, मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः, तस्य शब्दोऽयं न मानुषसंभवः' इति । तच्छ्रुत्वा मन्थरको देशकालोचितमाह—'भो लघुपतनक, यथाऽयं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति, तन्न तृषार्त एष', नूनं लुब्धकत्रासितः । तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वा' इति ।

तच्छ्रुत्वा चित्राङ्ग आह—'भो मन्थरक, ज्ञातं त्वया सम्यङ् मे त्रासकारणम् । अहं लुब्धकशरप्रहाराद्उद्वारितः कृच्छ्रेणात्र समायातः । मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति । तच्छरणागतस्य मे दर्शय किंचिदगम्यं स्थानं लुब्धकानाम् ।' तदाकर्ण्य मन्थरक आह—'भोश्चित्राङ्ग, श्रूयतां नीतिशास्त्रम्—

> द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
> हस्तयोश्चालनादेको, द्वितीयः पादवेगजः ॥ ११४ ॥

तद् गम्यतां शीघ्रं सघनं वनम्, यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः ।' अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच—'भो मन्थरक, गतास्ते लुब्धकाः स्वगृहोन्मुखाः । प्रचुरमांसपिण्डधारिणः । तच्चित्राङ्ग, त्वं विश्रब्धो वनाद्बहिर्भव ।' ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन्सरसि मध्याह्नसमये वृक्षच्छायाया अधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति । अथवा युक्तमेतदुच्यते—

सुभाषितमयद्रव्यसंग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु[1] कां प्रदास्यति दक्षिणाम् ॥ ११५ ॥

तथा च ।

सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य संपुटिका[2] नास्ति कुतस्तस्य सुभाषितम् ॥ ११६ ॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः – 'अहो, किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वापि व्यापादितः, उत लुब्धकैः, अथवा अनले प्रपतितो गर्तविषमे वा नवतृणलौल्यात्' इति ।

अथ मन्थरको वायसमाह—भो लघुपतनक, अहं हिरण्यकश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात् । तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित् तं जीवन्तं पश्यसि' इति । तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वले चित्राङ्गः कूटपाशनियन्त्रित[3] स्तिष्ठति । तं दृष्ट्वा शोकव्याकुलितमनाः तमवोचत्—"भद्र, किमिदम् ।' चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव ।

ततश्च बाष्पावसाने चित्राङ्गो लघुपतनकमाह 'भो मित्र, सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं संपन्नं यद्भवता सह मे दर्शनं संजातम् । उक्तं च—

१. प्रस्तावयज्ञेषु—सुभाषितप्रसंगरूपेषु यज्ञेषु ।
२. संपुटिका—सुभाषितरत्नमञ्जूषा । सुभाषितरत्न संग्रहः । तत्पुस्तकमिति यावत् । ( सम्पुटिका—'सुभाषित सन्दूक, कापी ) ।
३. कूटपाश नियन्त्रितः—कपट-जालेन निबद्धः ।

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद् द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥ ११७ ॥

तत्क्षन्तव्यं यन्मया प्रणयात् सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ—

अज्ञानाज्ज्ञानतो वाऽपि दुरुक्तं यदुदाहृतम् ।
तत्क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥ ११८ ॥

तच्छ्रुत्वा लघुपतनक आह—'भद्र, न भेतव्यमस्मद्विधैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वाऽऽगच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च—

संपदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्' ॥११९॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किंचिज्जीविताशया संश्लिष्ट आह—

आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद् योऽत्र मित्रविवर्जितः ॥ १२० ॥

हिरण्यक आह—'भद्र त्वं तावन्नीतिशास्त्रज्ञो दक्षमतिः । तत्कथमत्र कूटपाशे पतितः ।' स आह—'भोः, न कालोऽयं विवादस्य । तन्न यावत्स पापात्मा लुब्धकः समभ्येति, तावद् द्रुततरं कर्तयेम मत्पादपाशम् ।' तदाकर्ण्य विहस्याह हिरण्यकः—'किं मय्यपि समायाते लुब्धकाद्बिभेषि । ततः शास्त्रं प्रति महती मे विरक्तिः संपन्ना,

यद्भवद्विधा अपि नीतिशास्त्रविद एनामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि ।' स आह—'भद्र, कर्मणा बुद्धिरपि हन्यते । उक्तं च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १२१ ॥
विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याऽप्यतिपण्डिताः' ॥ १२२ ॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसतप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह—'अहो, न शोभनमापतितम् ।' हिरण्यक आह—'किं स लुब्धकः समायाति ।' स आह—'आस्तां तावल्लुब्धकवार्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठिताऽनेन, यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामः । यदि स पापात्मा लुब्धकः समागमिष्यति तदहं तावत्खमुत्पतिष्यामि, त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि, चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि ।' अत्रान्तरे प्राप्तोऽयं मन्थरकः ।

हिरण्यक आह—'भद्र, न युक्तमनुष्ठितं भवता, यदत्र समायातः । तद् भूयोऽपि द्रुततरं गम्यताम्, यावदसौ लुब्धको न समायाति ।' मन्थरक आह—'भद्र किं करोमि, न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते—

दयितजनविप्रयोगा वित्तवियोगाश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसंगमो न स्यात् ॥ १२३ ॥

वरं प्राणपरित्यागो, न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो भवन्ति, न भवद्विधाः ॥ १२४ ॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः । तं दृष्ट्वा मूषकेण तस्य स्नायुपाशः तत्क्षणात्खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः । लघुपतनको वृक्षमारूढः, हिरण्यकश्च समीपवर्तिबिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान्, अचिन्तयच्च--'यद्यपि कुरङ्गो धात्रापहृतः, तथाप्ययं कूर्म आहारार्थं संपादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिः भविष्यति ।' एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः । अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत्—'कष्टं भोः, कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १२५ ॥

यावदस्खलितं तावत्सुखं याति समे पथि ।[१]
स्खलिते च समुत्पन्ने विषमं च पदे पदे ॥ १२६ ॥

१—यावत् अस्खलितं—अपतनं पादभोटनाद्यभावश्च तावत् जनः समे पथि सुखं सुखपूर्वकं याति । परं स्खलिते च समुत्पन्ने पदे पदे प्रतिपदं विषमं विपद् उपतिष्ठते । 'क्षते प्रहारा निपतन्त्यभीक्ष्णं' मित्यर्थः ।

न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृङ् मित्रे निरन्तरे ॥ १२७ ॥

यदि तावत्कृतान्तेन मे धननाशो विहितः तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम्। अपरमपि मित्रं, परं मन्थरकसमं न स्यात्। उक्तं च--

असंपत्तौ परो लाभो, गुह्यस्य कथनं तथा।१
आपद्विमोक्षणं चैव, मित्रस्यैतत्फलत्रयम् ॥ १२८ ॥

तदस्य पश्चान्नान्यः सुहृन्मे। तत्किं ममोपर्यनवरतं व्यसनशरैर्वर्षति हन्त विधिः२। यत आदौ तावद्वित्तनाशः, ततः परिवारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति। अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां जीवितधर्मस्य। उक्तं च—

कायः संनिहितापायः संपदः क्षणभङ्गुराः।
समागमाः सापगमाः सर्वेषामेव देहिनाम् ॥ १२९ ॥

तथा च।

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥ १३० ॥

अहो साधूक्तं केनापि—

---

१—असंपत्तौ निर्धनत्वे सति परो लाभः महान् धनप्राप्तिर्भवति इति प्रथमं मैत्रीफलम्।

२—हन्त इति विषादे। विधिः-दैवं।

३—संनिहितः प्रासन्नः अपायः नाशो यस्य तादृशो भवति। सापगमाः-सवियोगाः, वियोगान्ता इत्यर्थः।

प्राप्ते भये परित्राणं, प्रीतिविश्रम्भभाजनम्[1] ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ १३१ ॥

अत्रान्तरे चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह—'अहो किं वृथा प्रलपितेन । तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते, तावदस्य मोक्षोपायश्चिन्त्यताम्' इति । उक्तं च—

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत् ।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥ १३२ ॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ १३४ ॥

अन्यच्च ।

अतीतलाभस्य सुरक्षणार्थं
भविष्यलाभस्य च सङ्गमार्थम् ।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः' ॥ १३५ ॥

तच्छ्रुत्वा वायस आह—भोः, यदि एवं, तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य मार्गे गत्वा किंचित्पल्वलमासाद्य तस्य तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्दैश्चञ्चुप्रहारैः शिर उल्लेखयिष्यामि, येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति अत्रान्तरे त्वया दर्भमयानि पाशानि खण्डनीयानि, येनासौ मन्थ-

१—प्रीति विश्रम्भयोः प्रेमविश्वासयोः भाजनम् पात्रं भवति ।

रको द्रुततरं पल्वलं प्रविशति ।' चित्राङ्ग आह—'भो, भद्रोऽयं त्वया दृष्टो मन्त्रः । नूनं मन्थरकोऽयं मुक्तो मन्तव्यः' इति । उक्तं च—

'सिद्धं वा यदि वासिद्धं चित्तोत्साहो निवेदयेत्[१] ।
प्रथमं सर्वजन्तूनां, तत्प्राज्ञो वेत्ति, नेतरः ॥ १३६ ॥

तदेवं क्रियताम्' इति । तथाऽनुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमपश्यत् । तं दृष्ट्वा हर्षितमना व्यचिन्तयत्—'नूनं पाशबन्धनवेदनया वराकोऽयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृतः । तद्वश्योऽयं मे कच्छपः सुयन्त्रितत्वात् । तदेनमपि तावद् गृह्णामि ।' इत्यवधार्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत् । एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं खण्डशः कृतम् । मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः । चित्राङ्गोऽप्यप्राप्तस्यापि तस्य तत उत्थाय वायसेन सह पलायितः । एतस्मिन्नन्तरे विलक्षो विषादपरो लुब्धको निवृत्तो यावत्पश्यति, तावत्कच्छपो गतः । ततश्च तत्रोपविश्येमं श्लोकमपठत्—

'प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः, स चापि नियतं नष्टस्तवादेशतः ।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यच्चान्यन्न कृतं कृतान्त कुरु रे तच्चापि सह्यं मया'॥ १३७ ॥

एवं बहुविधं विलप्य स्वगृहं गतः । अथ तस्मिन्व्याधे दूरतरं गते

---

१—सर्वजन्तूनां चित्तोत्साहः मनस उल्लासः प्रथमं—कार्यारम्भात् प्रागेव (कार्यं) सिद्धं वा असिद्धं इति निवेदयेत् । तत् इदं तथ्यं प्राज्ञो वेत्ति, न च इतरः ॥

सर्वेऽपि ते काककूर्ममृगमूषकाः परमानन्दभाजः परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः संप्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म।

एवं ज्ञात्वा विवेकिना मित्रसंग्रहः कार्यः। न च मित्रेण सह व्याजेन वर्तितव्यमिति। उक्तं च यतः—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते।
तैः समं न पराभूतिं संप्राप्नोति कथंचन॥ १३८॥

## इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसंप्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम्!



# शब्दार्थ संग्रहः

## ( कथामुखम् )

पृष्ठ ११७ आद्यः—पहला। तन्त्रम्—अध्याय या प्रकरण। आरभ्यते—शुरू किया जाता है। असाधनाः—साधनों से रहित। बहु श्रुताः—अनेक शास्त्रों को जानने वाले। साधयन्ति—सिद्ध (पूरा) कर लेते हैं। आशु—शीघ्र। आखुः—चूहा। कूर्मः—कछुआ। अनुश्रूयते—परम्परा से सुना जाता है। दाक्षिणात्यः—दक्षिण दिशा में स्थित। जनपदं—देश। महोच्छ्रायवान्—बहुत ऊंचाई वाला। उच्छ्रायः—ऊंचाई। विहगः—पक्षी। आवृतः—व्याप्त। कोटरः—वृक्ष की खोल। आश्वासितः—आश्वासन (शान्ति) दी है जिसने। पथिकः—यात्री। न्यग्रोधपादपः—बरगद का पेड़। शकुन्तः—पक्षी। निवहः—समूह। विष्वक्—चारों ओर। छदः—पत्ता। कुलं—झुण्ड। स्कन्धः—तना। प्रश्रय—आश्रय, निवास। विश्रब्धं—निःशङ्क होकर। मधुपः—भौंरा। कुसुमं—फूल। श्लाघ्यः—प्रशंसनीय। द्रुमः—वृक्ष। सत्वं—प्राणी। संघः—समूह। सुखदः—सुख देने वाला। भूभार भूतः—पृथ्वी पर भार रूप। अपरः—दूसरा।

श्लोकार्थ २—( स एव द्रुमः श्लाघ्यः ) वही वृक्ष प्रशंसा के योग्य है, ( छाया सुप्तमृगः ) जिसकी छाया में हरिण आदि पशु सोते हैं। ( शकुन्त निवहैः ) पक्षियों के झुण्डों से ( विष्वक् विलुप्तच्छदः ) जिस के पत्ते चारों ओर से खा लिये गये हैं। ( कीटैः आवृतकोटरः ) जिस के खोल कीड़ों से भरे हुए हैं। ( स्कन्धे कपिकुलैः कृतप्रश्रयः ) जिस के तने पर वानरों के झुण्ड आश्रय पाते हैं। ( मधुपैः ) भौंरों द्वारा ( विश्रब्धं निपीत कुसुमः ) निःशङ्क होकर जिसके फूलों का रस पान कर

लिला गया है। इस प्रकार जो वृक्ष ( सर्वाङ्गैः ) अपने सम्पूर्ण अंगो से —छाया, पत्ते, खोल, तना तथा पुष्प आदि से—( बहुसत्वसंघ सुखदः ) अनेक प्राणियों के समूह को सुख देने वाला है। ( अपरः ) और वृक्ष तो ( भूभार भूतः ) पृथिवी पर केवल भार रूप ही है। अर्थात् उस से संसार को कोई सुख नहीं।

वायसः—कौआ। प्राणयात्रार्थं—जीवन निर्वाह के लिये। पुरं—नगर। उद्दिश्य—लक्ष्य करके। जालहस्तः—जाल हाथ में लिये हुए। तनुः—शरीर। स्फुटित चरणः—फटे पैरों वाला। किंकरः—नौकर। संक्षयः—नाश। अभ्येति—आता है।

नोट—अध्यापक महानुभाव पढ़ाते समय विद्यार्थी को सन्धिच्छेद करके सन्धियों का ज्ञान तथा उनका भेद बताते जाएं। उदाहरण प्रथम पृष्ठ ( ११७ ) की सन्धियों का छेद करके दर्शाया जाता है।

## अच् सन्धि

(क) यस्यायम् = यस्य + अयम्। काकाखुः = काक + आखुः। नातिदूरस्थः = न+अतिदूरस्थः। यमकिंकराकारः=यमकिंकर+आकारः।

( सवर्ण दीर्घ )

(ख) साधयन्त्याशु = साधयन्ति + आशु। व्यचिन्तयत् = वि+अचिन्तयत्।

( यण् संधि )

(ग) अथेदम्=अथ+इदम। महोच्छ्रायः=महा+उच्छ्रायः। विहगोपभुक्तः= विहग+उपभुक्तः।

( गुण सन्धि )

## हल् सन्धि

तद्यथा=तत्+यथा। तावज्जालहस्तः=तावत्+जालहस्तः। तन्न=तत्+न। तत्क्षणान्निवृत्य=तत्क्षणात्+निवृत्य।

## विसर्ग सन्धि

(क) मित्रसंप्राप्ति र्नाम=मित्रसंप्राप्तिः+नाम। कीटैरावृतः=कीटैः + आवृतः।

( विसर्ग को र् )

(ख) संचयो भविष्यति = संचयः+भविष्यति। लघुपतनको नाम=लघुपतनकः+नाम। भूभारभूतोऽपरः = भूभारभूतः+अपरः। संमुखोऽभ्येति = संमुखः+अभ्येति। (विसर्ग को ओ)

(ग) असाधना अपि = असाधनाः+अपि। स्फुटित चरण ऊर्ध्वकेशः = स्फुटित चरणः+ऊर्ध्वकेशः। ( विसर्ग का लोप )

११८. दुरात्मा—दुष्ट। लुब्धः—लोभी। जालतण्डुल हस्तः—जाल और चावल हाथ में लिये हुए। समभ्येति—सामने आ रहा है। सर्वथा—बिल्कुल। कालकूट—तीव्र विष। लुब्धकः—शिकारी। वटतले—बरगद के नीचे। सिन्दुवार—संभालू। निभृतः—चुपचाप, बिना आहट किये। वाक्यार्गलिया निवारिता—वचन रूपी होंड़े से मना किये हुए अर्थात् निषेधाज्ञा द्वारा रोके हुए। हालाहलं—तीव्र विष। अत्रान्तरे—इसी बीच में। प्राणयात्रार्थं—आजीविका के लिये। निवार्यमाणः—मना किया हुआ। लौल्यं—लालच। कृतान्तः—यमराज। चेतस्—मन। कुब्जगामिनी—टेढ़े ( विपरीत ) रास्ते पर चलने वाली। प्रोद्यतयष्टिः—उठाई है लाठी जिसने, लाठी उठाये हुए। ऊचे—बोला। भेतव्यम्—डरना चाहिये।

११९. व्यसनं—कष्ट। हीयते—नष्ट होती है। संपत्तिः—खुशी का अवसर। एकरूपता—एक जैसी स्थिति। सविता—सूर्य। रक्तः—लाल। हेलया—अनायास, बड़े आराम से। मुक्तिः—छुटकारा। नोचेत—नहीं तो। भयविक्लवाः—भय से व्याकुल। समुत्पातः—उड़ना। अनुष्ठिते—करने पर। पृष्ठतः—पीछे २। भूमिस्थः—जमीन पर ठहरा हुआ। ऊर्ध्वाननः—ऊंचा मुख किये हुए। आदाय—लेकर। संहताः—मिले हुए। विवदिष्यन्ते—विवाद ( झगड़ा ) करेंगे। अनुसरति—पीछा करता है। दृष्टिः—आंख। अगोचरतां गतान्—ओझल हुए २। अगोचरः—अदृश्य। निवृत्तः—लौट गया। भाव्यं—होने योग्य, होनहार।

भवितव्यता—भाग्य, होनी। आस्ताम्—रहने दो। आमिषं—मांस। वर्तनोपायभूतं—आजीविका के उपाय रूप, आजीविका का साधन। वर्तनं—आजीविका। अदर्शनीभूतं—अदृश्य, अगोचर, ओझल। स्वस्थः—निश्चिन्त, बेखटके होकर।

१२०. अकुतोभयः—निर्भय। वश्यः—आधीन। वाजी—घोड़ा। सिध्यते—पूरा होता है। रणः—युद्ध। संधत्ते—मुकाबला करता है। प्राकारः—किले की चहार दीवारी, परकोटा। तारस्वरेण—ऊंचे स्वर से। सत्वरं—शीघ्र। व्यसनावस्था—कष्टकर दशा, बुरी हालत। अन्तर्गतः—अन्दर ठहरा हुआ। पुलकितः—रोमाञ्चित। तनुः—शरीर। प्रहृष्टात्मा—प्रसन्न मन वाला। त्वरमाणः—जल्दी करता हुआ। संपन्नः—युक्त। लोचनं—आंख। भारती—महाभारत की। इष्टा—प्यारी। भार्या—पत्नी। अपूर्वाणि—विलक्षण, नवीन। नित्यशः—प्रतिदिन। सौख्यं—सुख। प्रतिमं—सदृश।

१२१. कृतान्तः—यमराज। विमोक्षः—छुटकारा। वीक्षते—देखता है। खगः—पक्षी। निशाकरः—चन्द्रमा। रविः—सूर्य। ग्रह पीडनम्—राहु ग्रह से ग्रसा जाना। भुजङ्गः—सांप। विहंगमः—पक्षी। विधिः—दैव, भाग्य। तदनु—उसके बाद। वराकः—दयनीय, बेचारा। १२२. क्षितिपः—राजा। सीदति—दुखी होता है। प्रसीदति—प्रसन्न होता है। निषीदति—बैठता है। अर्थः—कार्य। दुःसाध्यं—कठिन। विस्मितमनाः—हैरान मन वाला। चलप्रकृतिः—चञ्चल स्वभाव वाला। नदीशः—समुद्र। अपेक्षते—कामना करता है। १२३. संप्रधार्य—सोचकर। व्याहरति—बुलाता है। वायसः—कौआ। गुरु—महान्। संगमः—संगति। भोज्यभूतः—भोजन रूप। विपुष्टः—निर्बल। अधिकः—बलवान्। प्राणमोक्षण—प्राणत्याग। प्रायोपवेशनं—उपवास, भूख हड़ताल। १२४. सुश्लिष्टः—दृढ़। पानीयं—पानी। शमयति—बुझा देती है। पावकः—अग्नि। द्विविधं—दो प्रकार का। सहजं—स्वाभाविक।

कृत्रिमं—बनावटी। योऽयं—जोड़नी चाहिये। धीमान्—बुद्धिमान्। समागमः—मेल। वैरयातना—शत्रुता के कारण पीड़ा। मीमांसाकृत्—मीमांसा शास्त्र को बनाने वाला। उन्मथ्य—मार दिया। निधिः—खजाना। वेलातटे—समुद्र तट के किनारे। अतिरुट्—अत्यन्त क्रोधी। तिर्यक्—पशु, पक्षी। अर्थः—प्रयोजन। मृत्—मिट्टी। सुखभेद्यः—आसानी से फूटने वाला। दुःसंधानः—मुश्किल से जुड़ने वाला। दुर्भेदः—कठिनता से फूटने वाला। सुकरसंधिः—आसानी से जुड़ने वाला। इक्षुः—गन्ना। पर्वन्—पोरी।

१२५. शपथ--सौगंध। प्रत्ययः--विश्वास। संधितः--सन्धि किया हुआ। वृत्र--एक विशेष असुर का नाम है। शक्र-इन्द्र। प्राज्ञः-बुद्धिमान्। आयुष्यं-दीर्घायु। मूल-जड़। निकृन्तति-काट डालता है। प्रागल्भ्यं--चतुराई। मैत्री--मित्रता। विदग्धवचनः--समझदारी से बात करने वाला। चरणपात--कदम रखना। कार्यः--करना चाहिये। कृतोपकारौ--उपकार करते हुए शकलं--टुकड़ा। वात्सल्यं--प्रेम। आहृतं-लाया हुआ। अर्पयति-देता हैं। युज्यते--उचित है। प्रतिगृह्णाति—लेता है। गुह्यं—गुप्त बात। आख्याति—कहता है। भोजयते—खिलाता है। लक्षणं—चिन्ह।

१२६. उपयाचित—देवता को भेंट की जाने वाली वस्तु, बलि। क्षयः—नाश। खड्गः—खली। निखिलं—सारा। रञ्जितः—प्रसन्न हुआ २। विरक्ति-वैराग्य। अन्यत्र-दूसरे स्थान पर। बुभुक्षितः--भूखा। प्रगुणीकृताः—तय्यार किये गये। उद्धरितः—मुक्त किया गया। बाष्पमोक्षः—आंसू बरसाना।

११७. नेष्यामि—खिलाऊंगा। शस्यं—अन्न। प्रलयः--नाश। तात—हे प्यारे। देशभङ्गः-देश का नाश। व्यवसायिन्-उद्यमी। सविद्यः-विद्वान्। प्रियवादिन्--मधुरभाषी। आकाशगतिः--आकाश मार्ग से आने वाला। आरोप्य--चढ़ा कर। उड्डीनं--उड़ना। असामान्य--विलक्षण, विशेष

१२८. सृष्टं—उत्पन्न किया है। अक्षरद्वयम्—दो अक्षरों वाला। परित्राणं—रक्षक। भेषजम्—औषध। निपुणतरं—भली भांति। पुलकित तनुः—रोमाञ्चित (सुप्रसन्न) शरीर वाला। विचेष्टितम्—चेष्टा। कायक्षालनसंभवैः—शरीर शुद्धि करने वाले। परिष्वंगः—आलिंगन। मूल्य विवर्जितः—अत्यन्त बहुमूल्य। अभ्याशे—समीप। भक्ष्यभूतः—भोजन रूप। १२९. निर्वेदः—वैराग्य। जीवितम्—जीवन। अन्तिकम्—समीप।

कण्ठस्थ करने योग्य श्लोक—४, ५, ७, १०, १२, १३, १६, १९—२४, २७, २८, ३१, ३२, ३७—३९।

## कथा १

नातिदूरे—कुछ दूरी पर। परिव्राजकः—संन्यासी। मठायतनं—मन्दिर, देवालय। प्राणयात्रा—आजीविका। निधाय—रख कर। पिधाय—बन्द कर के। नागदन्तं—खूंटी। प्रत्यूषे—प्रातःकाल। कर्मकरः—मजदूर, कर्मचारी। संमार्जनं—झाड़ू लगाना। उपलेपनं—गोबर आदि लीपना। मण्डनं—सजावट। सिद्धं—बना हुआ। निहितं—रखा हुआ। अगम्यं—पहुंच से बाहर। अटनं—घूमना। प्रसादः—कृपा। यूथं—झुण्ड। परिवृत्तः—घिरा हुआ। उत्पत्य—कूद कर। भक्ष्यविशेषाणि—उत्तम भोज्य पदार्थ। भूयः—फिर।

१३०. यथा शक्ति—अपने सामर्थ्य के अनुसार। निद्रान्तरितः—गाढ़ निद्रा में पड़ा हुआ। कृत्यं—काम। जर्जर वंशः—फटा बांस। अपसर्पामि—दूर हट जाता हूं। विग्रह परः—लड़ाई में तत्पर। प्राघुणिकः—अतिथि। प्रत्युत्थान विधिः—दूसरे का आदर करने के लिए उठना। संभाव्य—सत्कार कर के। प्रतिपत्तिपूर्वकम्—आदर सहित। अभ्यागतक्रिया—अतिथि सत्कार। नियोजितः—संतुष्ट

किया । संस्तरं—बिछौना । त्रासः—डराना । व्याक्षिप्तमनाः—विक्षिप्त मन वाला । प्रतिवचनं—उत्तर । तन्मयः—उस में मस्त हुआ २ । उदाहरति—बोलता है । परं—अत्यधिक । अभ्यागतः—अतिथि । जल्पसि—बोलता है ।

१३१. समाश्रय—ग्रहण करो। वार्ता—समाचार । प्रणयिन्—मित्र । प्रह्लादयन्ति—खुश करते हैं । अशंकित—निःशंक; निर्भय । हर्म्यम्—घर । गृही—गृहस्थी, मेजबान । सदनं—घर । शृंग—सींग । वृषः—बैल । व्याजः—बहाना । उपार्जनं—प्राप्ति, कमाई । पौरोहित्यं—पुरोहित का काम । दिन त्रयम्—तीन दिन । शोचितव्यः—शोचनीय प्रोन्नतं—बहुत ऊंचा । उत्प्लुत्य—कूद कर । मर्कटः—बन्दर । १३२. उत्पतनं—कूदना । निधानं—खजाना । ऊष्मा—गर्मी । शाण्डिली—शाण्डिल्य गोत्र में उत्पन्न । विक्राणाति—बेचती है । क्रीणाति—खरीदती है । लुञ्चितान्—कूटे हुए । इतरः—दूसरा ।

क० श्लोक—४२, ४४, ४५ ।

## कथा २

प्रावृट् कालः—वर्षा ऋतु । शुश्रूषितः—सेवा किया हुआ । देवार्चन परः—देवता की पूजा में लगा हुआ । संवाद—बातचीत । अवधानं—ध्यान । दत्तावधानः—ध्यान दे कर । दक्षिणायनसंक्रान्ति—सूर्य का दक्षिणायन में प्रवेश करना । प्रतिग्रहः—भिक्षा । १३३. परुषतरं—अत्यन्त कठोर । हस्तलग्ना—हाथों में पड़ी हुई ( विवाहित ) । मिष्टान्न—मिठाई । युज्यते—ठीक है । अर्थिन्—भिखारी । इच्छानुरूपः—यथेच्छ । विभवः—धन संपत्ति । ईश्वराः—धनी लोग । भूरि—बहुत अधिक । काकिणी—कौड़ी । श्रुतिः—वेदवचन ।

अन्तः स्वादु जलः—जिसके अन्दर मीठा पानी है। सुवृत्तः—अत्यन्त गोल, उत्तम आचरण वाला। कुब्जा—कुबड़ी। काणा—कानी। कर्कटी—ककड़ी, लौकी। वल्लभता—प्रीति। करः—हाथ, किरण। मित्रः—सूर्य। अभिभूतः—पीडित। पात्रं—योग्य व्यक्ति। देयम्—देना चाहिये। आनन्त्याय-कल्पते—मोक्ष प्रदान करता है।

# कथा ३

१३४. पुलिन्दः—शिकारी। पापर्द्धिः—शिकार। अञ्जनं—काजल। क्रोडः—सूअर। कर्णान्तं—कान तक। निशितं—तेज। सायकः—बाण। कोपाविष्टः—गुस्से से भरा हुआ। चेतस्—मन। पाटितोदरः—चिरे हुए पेट वाला। गतासुः—मरा हुआ। पञ्चत्वं गतः—मर गया। वेदना—पीड़ा। निराहारतया—भोजन न मिलने के कारण। विधिः—भाग्य। संनियोजितम्—जोड़ा हुआ।

१३५. स्नायुपाशः—तांत की बनी डोरी। कोटिः—अगला हिस्सा। उपर्जितं—कमाया हुआ। रसायनं—पौष्टिक दवाई। प्राज्ञः—बुद्धिमान। हेलया—लापरवाही से, उपेक्षा से। चाप चटितं—धनुष पर चढ़ा हुआ। निधनं—मृत्यु। निर्धनः—गरीब। सृज्यन्ते—बन जाते हैं। प्रबोधिता—समझाई हुई। स्तोकः—थोड़ा। लुञ्चित्वा—कूट कर। सूर्यातपः—धूप। व्यग्रा—लगी हुई, फंसी हुई। उत्सर्गः—छोड़ना। पराङ्मुखीभूतः—प्रतिकूल हुआ २।

१३३. गृहिणी—पत्नी। कामन्दकी शास्त्रं—एक नीति शास्त्र के ग्रन्थ का नाम है। व्याहृतम्—कहा। क्रमण मार्गः—आने जाने का रास्ता। यूथं—झुण्ड। परिवृतः—घिरा हुआ। अभ्यागतः—अतिथि। खनित्रम्—कुदाल। स्वहस्तिका—कुदाल। सकृत्—एक बार। विबुधः—बुद्धिमान। सारता—तत्व। हस्ततुला—हाथ रूपी तराजू। पल प्रमाणं—पल भर भार को। १३७. सपरिजनः—परिवार (भृत्य आदि) समेत। कायः—शरीर।

सहसा—एकदम। उत्पपात—उछला। प्लावितः—व्याप्त कर दी है, भर दी है। वसुन्धरा—पृथ्वी। अपास्य—हटा कर। कूटरचना—कपट जाल। वागुरा—हरिण को फंसाने का जाल। शिखाकलापः—ज्वालाओं का समूह। जटिलः—व्याप्त। शर गोचरः—बाण की पहुंच के अन्दर। जवेन—वेग से। उत्पत्य—कूद कर। अन्तः—अन्दर। विधिः—दैव। विधुरः—प्रतिकूल। पौरुषं—उद्योग। चर्चिता—लिप्त। निधानं—खज़ाना। वसतिः—निवास। ऊष्मन्—गर्मी। उद्वेगकारकम्—दुःखदायक।

१३८. व्यतिक्रान्तः—बीता। अस्तमिते (अस्तं+इते)—अस्त हो जाने पर। अर्कः—सूर्य। सोद्वेगः—उदास, दुःखी। परिग्रहः—परिवार (भृत्यादि)। जर्जरवंशः—फटा बांस। स्थितिः—दशा। पराभवति—तिरस्कार करता है। उद्धतं—उद्दण्ड, कठोर। समता—बराबरी। गतशङ्कः—निर्भय। हस्तगतं जातम्—हाथ में पड़ गया। नाम धारकः—नाम मात्र का। अर्थः—धन। जीवितम्—जीवन।

१३९. अल्पमेधस्—मूर्ख। मेधा—बुद्धि। उच्छिद्यन्ते—नष्ट हो जाती हैं। कुसरितः—छोटी नदियां। काकयवाः—खोखले जौ। भवः—होने वाला। प्रकाशिनी—प्रकाशित करने वाली। बाध्यते—दुःखी होता है। प्रकृत्या—जन्म से। कीटः—कीड़ा। खातः—खोदा हुआ (खाया हुआ)। दग्धः—जला हुआ। सर्वतः—सब तरफ से। गण्डः—कपोल, गाल। उपधानीकृतं—तकिया बनाये हुए। मिथः—परस्पर। जल्पन्ति—बातचीत करते हैं। पृष्ठः लग्नः—पीछे लगा हुआ। अनुजीविन—सेवक। अभ्येति—आता है। विडम्बना—उपहास। एकाकिन्—अकेला। योगनिद्रां गतः—आंख बन्द किये पड़े रहना।

१४०. वित्तपेटा—धन की पिटारी। दौर्गत्यं—बुरी हालत। दैन्यं—दीनता। पराभूतिः—तिरस्कार। शाश्वतः—निरन्तर। कलुषी कृतः—दुःखी। गोपयन्ति—छिपाते हैं। कपर्दकाः—कौड़ियां। मृद्—मिट्टी।

अधनः--निर्धन। दातुकामः--देने की इच्छा वाला। देहिन्--मनुष्य, प्राणी। अपहारः--चोरी। असुः--प्राण। १४१. सनातनाः--सदा रहने वाले। पेटा--पिटारी। प्रबुद्धः--जाग गया। तापसः--मुनि। असंदिग्धं--निःसन्देह। क्षुत्--भूख। क्षामः--क्षीण हुआ २। १४२. मांसाशिन्--मांस खाने वाला। नितान्तं--सर्वथा। वैर कृत्--शत्रुता करने वाला। विध्वस्तं--बिगाड़ा हुआ, नष्ट किया गया। आस्यताम्--बैठिये। संतापः--दुःख। अभ्रं--बादल। खलः--दुष्ट। सिद्धं--पका हुआ। योषित्--स्त्री। यौवनं--जवानी। उपभोग्यानि--भोगे जा सकते हैं। जितात्मानः--जितेन्द्रिय। स्पृहा--कामना, इच्छा। आमिषं--मांस। श्वापदः--हिंस्र पशु। भू--पृथिवी। अर्जनं--कमाना। कष्टसंश्रयान्--दुःखदायी। अर्थार्थी--धन का अभिलाषी। मोक्षार्थी--मोक्ष का अभिलाषी। आप्नुयात्--प्राप्त कर सकता है। विषयः--देश। स्मृतः--बताया गया है। लांगुलं--पूंछ। प्रहरणं--शस्त्र। गाहते--प्रवेश करता है। द्विपेन्द्रः--बड़ा हाथी। तृष्णां छिनत्ति--प्यास बुझाता है। अर्थहीनः--निर्धन। प्रज्ञावान्--बुद्धिमान्।

१४३. सीदति--दुःखी होता है। समर्थः--शक्तिशाली। व्यवसायिन्--उद्योगी। सुविद्यः--विद्वान्। परः--पराया। प्रज्ञानिधिः--बुद्धि का खजाना, अत्यन्त बुद्धिमान्। प्राकृत पुरुषः--साधारण मनुष्य। दीर्घसूत्रं--सुस्ती से काम करने वाला। अदीर्घसूत्रं--चुस्त। क्रियाविधिज्ञः--काम करने के ढंग को जानने वाला। व्यसनं--शराब पीना आदि बुरी आदत। असक्तः--न फंसा हुआ। मार्गति--ढूंढती है। कर्मप्राप्त्या--पूर्व जन्म कर्मों के कारण। एतावन्ति--इतने। त्वदीयं--तुम्हारा। अनात्मीयं--पराया। अपह्रियते--छीन लिया जाता है। समश्नुते--भोगता है।

क० श्लोकः---५७, ५८, ६४, ६५, ६८, ७३, ७७, ७६, ८१, ८३, ८४, ८६, ८७।

## कथा ४

१४३. कौलिकः--जुलाहा। रञ्जितानि--रंगबिरंगे। आच्छादनं--ओढ़ना।

विज्ञानिनः--जानने वाले। १४४. कनकं--सोना। अधारणकं--गुजारे के लिये अपर्याप्त। भाव्यं--जो अवश्य होना है। भवितव्यता--होनहार वत्सः--बछड़ा। विन्दति--पा लेता है। पुरा--पूर्व जन्म में। प्राक्तनं--पूर्व जन्म वाला। आतपः--धूप। संश्लिष्टः--जुड़ा हुआ। इतरेतरं--परस्पर। व्यवसाय परः--उद्योगी। तालिका--ताली। कापुरुषः--कायर पुरुष।

१४५. पौरुषं--उद्योग। सिद्ध्यति--सफल होता है, पूरा होता है। मनोरथः--इच्छा। चेत्--यदि। दैवान्तरित पौरुषः--भाग्य ने जिसके उद्योग को ढक दिया है (निष्फल कर दिया है)। उपालभ्यः--उलाहना देना चाहिये। शतत्रय--तीन सौ। उपार्जनं--संग्रह। भूयः--फिर। व्यालः--सांप। स्कन्धः--तना। निशीथं--आधी रात। रौद्रः--भयंकर। प्रजल्पन्--बातचीत करता हुआ। आच्छादनं--ओढ़ना। समृद्धिः--धन संपत्ति। परिणतिः--उपभोग, भोग करना। प्रबुद्धः--जागा। १४६. रिक्तं--खाली। साक्षेपं--धिक्कारते हुए। हेलया--एकदम। अकिंचनः--खाली हाथ। पत्तनं--नगर। शत पञ्चकं--पांच सौ। अटवी--जंगल। सुश्रान्तः--अत्यन्त थका हुआ। देयम्--देना चाहिये। परिणामः--उपभोग। आयत्तः--आधीन। आपन्नः--प्राप्त हुआ २। ग्रन्थिः--गांठ। पाशः--फन्दा। पुमान्--पुरुष। अपहारकः--छीनने वाला। वराटिका--कौडी। प्रभूतं--बहुत।

१३७. कृपणः--कंजूस विणाक--बनिया। गुप्तधनः--जिस का धन सुरक्षित पड़ा रहता ह, काम में नहीं आता। उपभुक्तधनः--धन का भोग करने वाला। कृच्छ्रात्--बड़ी मुश्किल से। निर्भत्स्यमानः--झिड़का जाता हुआ। हठात्--जबरदस्ती। वेला--समय। भक्ति वर्जितं--अनादर से। अशनं--भोजन। मन्त्रयति--सलाह करता है। अयुक्तं--अनुचित। १४८. विषूचिका--हैज़ा। रुजाभिभूतः--रोग से पीडित। भव्यं--सुन्दर। मिथः--परस्पर। व्यवहारकः--महाजन। कृत्यम्--काम। कदर्तः--कंजूस। दत्तभुक्तफलः (दत्तभुक्तधनः) धन का दान तथा भोग करने वाला। भोगबन्ध्यतया--भोग शून्य होने के कारण। १४९. निखातः--

गाड़ा हुआ। संस्थाः—ठहरा हुआ। परीवाहः--निकास। अम्भस्—पानी। मधुकरी--मधु मक्खी। गतिः--दशा स्थित्यर्थं--जमा करने के लिए। शैत्यं--सरदी। हुताशनः--आग। पवनः--वायु। वन्यं--जंगली। गमयन्ति--बिताते हैं। निधानं--खजाना।

१५०. पीयूषं—अमृत। निर्वृत्तिः—शान्ति। परा—महान्। उच्चैः—ऊंचे स्वर से। स्वापतेयं—धन। मर्त्यः—मनुष्य। ईहा—इच्छा। शुभावहा—कल्याणकारी। प्रक्षालनं—धोना। पङ्कः—कीचड़। वरं—बेहतर। निधिः—खजाना। रिपुः—शत्रु। सकृत—एक बार। आर्यः—सज्जन। पथ्यं—हितकारी। ससंभ्रमः—घबराया हुआ। १५१. शरस्तम्बं—सरकण्डों का झुण्ड। तृषार्तः--प्यास से व्याकुल। मानुषः--मनुष्य। संभव--उत्पन्न। उच्छ्वासः--ऊंचा सांस। उद्भ्रान्त दृष्टि--घबराई नजर। त्रासितः--डराया हुआ। त्रासः--भय। उद्धारितः--निकला हुआ। यूथं--झुण्ड। कृच्छ्रेण--कठिनता से। विमुक्तिः--छुटकारा। विश्रब्धः--निर्भय। मित्रभावः--मित्रता।

१५२. प्रस्ताव यज्ञः—सुभाषित प्रसंग रूपी यज्ञ। दक्षिणा—दान। ०—सुभाषित गोष्ठी के प्रारम्भ होने पर सभा में क्या सुभाषित श्रोताओं को सुना सकेगा। संपुटिका—सुभाषित संग्रह की पिटारी (कापी)। अनलः—आग। गतः विषमः—भयकर खड्ड। शोधय—खोज करो। पल्वलं—जोहड़। कूटपाशः—कपट जाल। नियन्त्रतः—बंधा हुआ, जकड़ा हुआ। १५३. अत्ययः—नाश। दुरुक्तं—दुर्वचन। उदाहृतम्—कहा है। प्रीति परं—प्रसन्न। व्यसन—आपत्ति। संपत्—सुख का अवसर। विबुधः—विद्वान्। अमलः—निष्कपट। दक्षमतिः—चतुर बुद्धि वाला। कर्तय—काट दो। विरक्तिः—वैराग्य।

१५४. कृतान्तः—यमराज। कुब्जगामिनी—विपरीत मार्ग में जाने वाली। ललाटः—माथा। खं—आकाश। उत्पतिष्यामि—उड़ जाऊंगा। दयित जनः—प्रेमी जन। विप्रयोगः--वियोग। महौषध कल्पः—

महान् औषधि के समान। वयस्यः—मित्र। १५५. भवादृशः (भवद्विधः)—आप जैसा। शरासनं—धनुष। स्नायु पाशः—तांद की फाही। खण्डतः—काट दिया। कुरङ्गः—हरिण। धाता—दैव। आहार निर्वृत्तिः-भोजन की पूर्ति। पर्यदेवयत्—रोने लगा। अर्णवः—समुद्र। छिद्रं-दोष। बहुलीभवन्ति—बढ़ जाते हैं। स्खलितं—त्रुटि, भूल, गिराना। पदे पदे-कदम २ पर। १५६. दाराः-पत्नी। सोदर्यः-सगा भाई। आत्मजः—पुत्र। विश्रम्भः-विश्वास। निरन्तरः-अभिन्न हृदय वाला। असम्पत्तिः-निर्धनता। गुह्यं-गुप्त बात। अनवरतं-निरन्तर। हन्त-हाय (विषाद सूचक अव्यय)। आदौ-पहले। भ्रंशः—नाश। कायः—शरीर। संनिहितापायः—जिस का नाश निकट है। क्षणभंगुरः—क्षण में नष्ट हो जाने वाला। समागमः-मेल। सापायः-नाशवान्। देही—प्राणी। क्षतं-घाव। अभीक्ष्णम्-निरन्तर। दीप्यति-भड़कती है। समुल्लसन्ति-बढ़ती हैं।

१५७. परित्राणं—रक्षा करना। आक्रन्द परः—रोता हुआ। प्रलपितं—विलाप। परिदेवयेत्—रो देवे। भेषजं—औषध। नयः—नीति। उच्छेद समारम्भः—नाश का यत्न करना। निश्चेतनः-बेहोश। उल्लेखयिष्यामि-कुरेदूंगा। प्रत्ययः-विश्वास। वेदना-पीड़ा। वायस सनाथं-कौए के साथ। वश्यः—आधीन। सुयन्त्रितत्वात्—अच्छी तरह बधा हुआ होने के कारण। कच्छपः—कछुआ। अद्रवत्—दौड़ा। वज्रोपमा—वज्र के समान। प्रहरणं—प्रहार। वेष्टनं—लपेटी हुई रस्सी। विलक्षः—लज्जित। कूर्मः—कछुआ। विवेकी—बुद्धिमान्। व्याजः-कपट। वर्तितव्यम्—व्यवहार करना चाहिये। कौटिल्यं—कुटिलता। पराभूतिः—पराभव, अपमान।

कण्ठ करने योग्य श्लोक—८६—९७, १००—१०६, १०६—११२, ११४, ११६, १२१, १२८, १२६—१३१, १३५, १३८।

**इति परिसमाप्तं संशोधितं संक्षिप्त पञ्चतन्त्रस्य**
**शब्दार्थ-टिप्पणी-संवलितं पूर्वार्धम्।**

---



# सरल शब्द रूपावली

## ( नूतन संस्करण )

यह पुस्तक वर्तमान प्रचलित अनेक शब्दरूपावलियों की न्यूनताओं को देख कर उनकी पूर्ति के निमित्त लिखी गई है । भूमिका में शब्दों के सम्बन्धों में सामान्य परिचय दे दिया गया है जिससे शब्दों की रचना तथा प्रयोग समझने में छात्रों को सुविधा हो ।

सम्पूर्ण शब्दों का संज्ञा, सर्वनाम तथा विशेषण की दृष्टि से विभाग कर दिया गया है । प्रत्येक शब्द के नीचे छात्रोपयोगी टिप्पणी भी दे दी गई है ।

शब्द रचना के मर्म को बुद्धिपूर्वक हृदयङ्गम किया जा सके, इसके लिये अन्त में अभ्यासार्थ एक प्रश्नमाला दे दी गई है । इस कारण छात्रों के लिये यह पुस्तक अन्य शब्दरूपावलियों की अपेक्षा अधिक उपयोगी सिद्ध हुई है ।

छपाई सुन्दर तथा स्वच्छ है ।

# सरल धातु रूपावली

सरल शब्द रूपावली की लोकप्रियता देख कर उसी शैली में यह धातु रूपावली लिखी गई है । विशेषतः सार्वधातुक तथा आर्धधातुक लकारों को पृथक्-पृथक् कर दिया गया है ।

छपाई सुन्दर तथा स्वच्छ है ।

प्राप्ति स्थान—

पुस्तक भण्डार, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार
डाकघर : गुरुकुल कांगड़ी, जिला : सहारनपुर ।